श्रीः

# मुहूर्तकल्पद्रुमः

श्रीमद्विद्वद्वर्यविठ्ठलदीक्षितविरचितः

स च

सूर्यपुरस्थेन ज्योतिर्विदा कृष्णशंकर केशव-
रामेण सम्पाद्य संशोधितः ।

---

शकाब्दाः १८५७, सन १९३५.

---

मूल्यं ६ आणकाः.

श्रीः

# मुहूर्तकल्पद्रुमः

श्रीमद्विद्वद्वर्यविठ्ठलदीक्षितविरचितः

स च

सूर्यपुरस्थेन ज्योतिर्विदा कृष्णशंकर केशवरामेण सम्पाद्य संशोधितः ।

मुम्बय्यां

पाण्डुरङ्ग जावजी इत्येतैः
स्वीये "निर्णयसागरमुद्रणालये" मुद्रापयित्वा
प्रकाशितः ।

प्रतयः १०००.

शकाब्दाः १८५७, सन १९३५.

मूल्यं ६ आणकाः.



## ॥ प्रस्तावना ॥

"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति" श्रुतेः, वेदो नित्यमधीयतां तदुदितं कर्म स्वनुष्ठीयताम्" इति श्रीभगवच्छंकराचार्यवचनाच्च षडङ्गवेदाध्ययनपूर्वं तदुक्तधर्माचरणस्यात्यावश्यकत्वाद् द्विजातीनां च, द्विजत्वञ्च "प्रथमं मातृतो जन्म द्वितीयं चोपनायनात्" इत्यादि वचनादुपनायनाधीनम्; तच्च "अष्टमवर्षे ब्राह्मणमुपनयीत, तमध्यापयीत, वसन्ते ब्राह्मणोऽग्नीनादधीत, दर्शपूर्णमासाभ्यां यजेत" इत्यादिश्रुतेः। वर्षादिज्ञानं वसन्ताद्यृतुज्ञानं दर्शपूर्णमासयोश्च ज्ञानं ज्योतिषं विना सर्वथा न निर्वहतीति वेदाङ्गेषु च ज्योतिषस्य चक्षूरूपत्वाच्चक्षुरन्तरा मनुष्यजन्मनोऽपि निरर्थकत्वादवश्यं चक्षूरूपं ज्योतिःशास्त्रमध्येतव्यम्। तच्च "सिद्धान्त, संहिता, होरा, रूपस्कन्धत्रयात्मकम्" इत्युक्तेश्च मुहूर्तसमुदायस्य संहिताविभागे परिगणितत्वा"च्छुभमुहूर्तारब्धं कार्यं शीघ्रं सिध्येदशुभमुहूर्तारब्धं तु न कदापि सिध्येत्" इति वृद्धोक्तेश्च मुहूर्तज्ञानस्य परमोपयोगित्वं विचार्य तत्रभवता दैवज्ञशिरोमणिना श्रीविट्ठलदीक्षितेन "मुहूर्तकल्पद्रुमः" विरचितः। स च दैवज्ञानां परमश्रेयस्करः केनापि विदुषाद्यावधि ज्यौतिषिकाणां

चरणकमलेषु संस्कृत्य न समर्पितो विरलप्रचारश्चेति समाकलय्य चिरकालाज्ज्योतिर्विदां गृहेषु गवेषयन् त्रिधा विभक्तं प्राचीनं छिन्नभिन्नदशं मुहूर्तकल्पद्रुमं सम्पादितवान् । अवश्यमयं मुद्रणपथमर्हतीति निश्चित्य संशोधनकार्यं यथामति च सम्पाद्य सच प्रकाशार्थं निर्णयसागरमुद्रणालयाधिपतये श्रीयुत **पांडुरंग जावजी**महोदयाय प्रदत्तः ।

यद्यपि अतिजीर्णैनैकेन पुस्तकेन छिन्नभिन्नदशेन संशोधनं कुर्वाणस्य "गच्छतः स्खलनं क्वापि" इति न्यायादत्र यदशुद्धं दृष्टिपथमापतेत्तन्न ग्रन्थकर्तुः किन्तु मदीयं शुद्धपुस्तकप्राप्त्यभाव—मानसचञ्चलत्वजनितमिति विद्वद्वर्यैः क्षन्तव्योऽहं समागताशुद्धिपरिमार्जनाय प्रबोधनीयश्च येन द्वितीयावर्तने सर्वं समचतुरस्रं भवेदिति. श्रीमज्ज्योतिर्वित्तिलको विठ्ठलदीक्षितः शाके १५४१ श्रीनीललोहिताधिष्ठितां श्री वाराणसीं भूषयति स्मेति कुण्डसिद्धिसमाप्तौ "इति मण्डप० शशियुग० इति श्लोकाभ्यां स्पष्टतया प्रतीयते. श्रीमता विठ्ठलदीक्षितेन विरचिता षट्षष्टिश्लोकात्मिका पञ्चाध्यायी कल्पवल्लीपद्धतिः ( जातकपद्धतिः ) वर्तते तामपि यथावकाशं प्रकटीकरिष्यामि ।

**विदुषामनुचरः** ज्योतिषी **कृष्ण शंकर केशवरामः** रैकः ।

---

# अथ मुहूर्तकल्पद्रुमस्थविषयाणामनुक्रमणिका ।





# "मुहूर्तकल्पद्रुमस्यानुक्रमणिका"

## "विवाहकुसुमम्"
### १२ श्लो. ११६

"वास्तुकुसुमम्" १७ श्लो. ४४

## "गृहप्रवेशकुसुमम्"

### २८ श्लो. ११



## "देवप्रतिष्ठाकुसुमम्"

### १९ श्लो. १०

ॐ

# मुहूर्तकल्पद्रुमः ।

॥ श्रीगणेशाय नमः ॥

( मंगलम् )

अनाथबन्धुं गणनाथमन्तश्चित्ते निवेश्य क्षपितान्तरायम् ।
प्राचीनवाक्यानि विचार्य सम्यक् मुहूर्तकल्पद्रुममारभेऽहम् १
श्रीवाणि ! कल्याणपरंपराभिः संपूरयैनं मम वाङ्गिगुंफम् ।
मुहूर्तकल्पद्रुमनामधेयं विज्ञापनेयं तव पादपद्मे ॥ २ ॥

( संवत्सरकुसुमम् )

अथ संवत्सरानयनम्—

शाकः सार्कः १२ षष्टि ६० हृन्मानवोऽब्दः
शेषः ख्यातो दक्षिणे नर्मदायाः
सोऽयं नन्दैरन्वितो जैवसंज्ञोऽ
न्यस्मिन् देशे वत्सरः संप्रदिष्टः ॥ ३ ॥

अथ नारदोक्तैरेव षड्भिः श्लोकैः षष्टिसंवत्सरानाह—

प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः ।
अंगिराः श्रीमुखो भावो युवा धाता तथैव च ॥ ४ ॥
ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो वृषः ।
चित्रभानुः सुभानुश्च तारणः पार्थिवो व्ययः ॥ ५ ॥

सर्वजित्सर्वधारी च विरोधी विकृतिः खरः ।
नंदनो विजयश्चैव जयो मन्मथदुर्मुखौ ॥ ६ ॥
हेमलंबो विलंबश्च विकारी शार्वरी प्लवः ।
शुभकृच्छोभनः क्रोधी विश्वावसुपराभवौ ॥ ७ ॥
प्लवंगः कीलकः सौम्यः साधारणो विरोधकृत् ।
परिधावी प्रमादी च ह्यानन्दो राक्षसो नलः ॥ ८ ॥
पिंगलः कालयुक्तश्च सिद्धार्थी रौद्रदुर्मती ।
दुंदुभी रुधिरोद्गारी रक्ताक्षी क्रोधनः क्षयः ॥ ९ ॥

( अथलुप्तसंवत्सरज्ञानम् )

कुंभाच्चतुष्केतरगोऽतिचारी न पूर्वराशिं गुरुरेति वक्री ।
तदा विलुप्ताब्द इहातिनिंद्यः सोमोद्भवाजन्हुभवांतराले १०
चेत्स्पष्टया वाप्यथ मध्यगत्या राश्यंतरं यत्र च चांद्रवर्षे ।
गुरुर्न यायादधिवत्सरोऽधिमासेन तुल्यः स शुभेषु वर्ज्यः ११

( अथोत्तरदक्षिणगोलादिज्ञानम् )

मेषाद् घटादुत्तरयाम्यगोलौ याम्यं च सौम्यं त्वयनं निरुक्तम् ।
कर्कान्मृगाच्चाथवसंतमुख्या मीनादियुग्माद्दतवो निरुक्ताः १२
वसंतघर्मर्तुघनर्तुसंज्ञाः शरद्धिमाख्यः शिशिरः क्रमेण ।
स्वनामतुल्यर्क्षपतीश्वराः स्युः

( अथ मासज्ञानम् )

मासाश्च सौरैंदवसावनार्क्षाः ॥ १३ ॥
त्रिंशद्दिनः सावनअर्क्ष इन्दोः भभोगतः संक्रमतस्तु सौरः ।
दर्शावधिश्चैंदव एष मासः कृष्णादिको विंध्यत उत्तरस्याम् ॥
व्रतादिके स्यादथ चान्यदेशे शुक्लादिकश्चाप्यथ शुक्लकृष्णौ ।

पक्षौ भवेतामिह दैवपित्र्यौ शस्तौ शुभे कर्मणि चाशुभेऽपि।
ग्रंथाननेकानवलोक्य सम्यक् संदर्भिते विठ्ठलदीक्षितेन।
मुहूर्तकल्पद्रुमनामधेये संवत्सराख्यं कुसुमं समाप्तम् ॥१६॥

इति श्रीविठ्ठलदीक्षितविरचिते
मुहूर्तकल्पद्रुमे संवत्सरकुसुमम्।

---

( तिथिकुसुमम् )

( तिथिस्वामिनः )

वह्निधातृगिरिजागणनाथाः कुण्डलीगुहरवीश्वरदुर्गाः।
कालविश्वहरिकामशिवाः स्युश्चंद्रमाश्च पितरस्तिथिनाथाः १

( तिथिसंज्ञाः )

नंदाभद्राः स्युर्जयाश्चैव रिक्ता पूर्णा तिथ्यो निंद्यमध्यातिशस्ताः
शुक्ले पक्षेऽथासिते वैपरीत्यं शुक्रज्ञारार्कीज्ययोगात्सुसिद्धाः २
उदयद्वितयेऽपि या भवेन्न च या स्यादुदयद्वयेऽपि च
दशमीद्विमितोज्झिता समा नवमीमास्तिथयो न शोभनाः ३

( आवश्यके तिथिषु वर्ज्यघटिकाः )

आवश्यके प्रथमजाघटिकास्तिथीषु
वेदांगहस्तिनवसूर्यमनून्मितासु।
वस्वंकशक्रशरवर्गदिशः शराश्च
वर्ज्याः परैर्दशमिता अपराः शुभाः स्युः ॥ ४ ॥

| | | | | | |
|---|---|---|---|---|---|
| ४ | ६ | ८ | ९ | १२ | १४ |
| ८ | ९ | १४ | २५ | १० | ५ |

( दग्धतिथयः )

धनुर्मीनगे गोघटे कर्किमेषेऽ-
गनायुग्मके वृश्चिकश्चापदेंद्रे।

सजूके मृगास्ये रवौ दग्धसंज्ञा
द्वितीयादयो युग्मतिथ्यो भवंति ॥ ५ ॥

( मन्वादि-युगादि )

तिथ्यग्नीनतिथिस्तिथीदशमिके कृष्णाष्टमीविद्धयो
नंदाभानुतिथी न शूलभृदगोऽमापंचदश्यौ त्विमाः ।
मन्वाद्या मधुनोऽथ राधगिरिजाऽप्यूर्जे च नंदोन्मिता
माघामाप्यसितोऽपि भाद्रमदनश्चैता युगाद्याः स्मृताः ॥ ६ ॥

| चै. | ज्ये. | आ. | श्रा. | भा. | अश्वि. | का. | पौ. | मा. | फा. |
|---|---|---|---|---|---|---|---|---|---|
| १५ | १२ | १५ | ८ | ३ | ९ | १२ | १२ | ७ | ३० |
| ३ | १५ | १० | | | | १५ | ११ | | १५ |

| सत्य. | त्रेता. | द्वापर | कलि. |
|---|---|---|---|
| का.सु | वै.सु. | माघ. | भा.वदि |
| ९ | ३ | ३० | १३ |

ग्रंथाननेकानवलोक्य सम्यक् संदर्भिते विट्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुमनामधेये तिथ्याख्यमेतत्कुसुमं समाप्तम् ॥ ७ ॥

---

( वासरकुसुमम् )

रविः शशांकः शशिजत्रयं च प्रायः शुभे कर्मणि ते प्रशस्ताः ।
प्रोक्ते परौ क्षीणशशीनभौममंदास्तु तैर्युक् च बुधोऽपि पापाः
भृगुः शशी सिते हितोऽरुणेऽरुणः कुजस्तथा ।
सितेतरे शनिर्हितः परौ परत्र कीर्तितौ ॥ २ ॥
बलिष्ठोपचयस्थस्य वारे प्रोक्तं प्रसिध्यति ।
अबलस्य दिने कृत्यं यत्नादपि न सिध्यति ॥ ३ ॥

( पुंस्त्रीषंढसंज्ञकाः )

नरा महीजेज्यदिवाकराः स्युः नार्यौ सितेन्दू ज्ञशनी च षंढौ ।

( वेदाधिपाः )

बृहस्पतिर्भार्गवभौमसौम्या वेदेश्वरास्ते क्रमशो भवंति ॥४॥

( वर्णाधिपाः )

विप्रपती भृगुदेवतपूज्यौ भानुकुजौ धरणीपतिनाथौ ।
वैश्यजनाधिपतिर्विधुरीशो दासजनस्य बुधोंऽत्यज ऐनिः ५

( उच्चनीचानि )

अजो वृषश्चापि मृगोऽथ कन्या कर्कौ झषो जूक इति क्रमात्स्युः
उच्चानि सूर्यादिखगेश्वराणामेभ्यश्च यत्सप्तमभं च नीचम् ६

( वारप्रवृत्तिः )

रेखास्वदेशांतरयोजनानि
पादेन हीनानि पलानि तानि ।
युतानि पश्चात्तिथि१५ नाडिकाभिः
प्राक्तद्विहीनानि निजध्रुवः स्यात् ॥ ७ ॥
एतद्दिनार्धांतरमूर्ध्वमादौ वारप्रवृत्तिर्ध्रुवकक्षयर्ध्योः ।
सर्वाणि कार्याणि दिनोदयात्स्युर्वारप्रवृत्तेः किल कालहोराः ८

( होरेश्वराः )

होरेश्वराः स्युर्दिनपाद्दिनेशशुक्रज्ञचंद्रार्किसुरेज्यभौमाः ।

( होराप्रमाणम् )

होराप्रमाणं घटिकाद्वयं च सार्धं विदध्यादिह वासरोक्तम् ९

( कलांशाः )

रवौ, तु शक्राष्टनगाः कलांशा हेया विधौ विश्वसुरेशसूर्याः ।
दशात्रिवेदा धरणीतनूजे बुधे दिगंकाष्ट गुरौ नृपाः षट् १०
पंचेंदवश्चापि भृगौ षडाब्धि पंचप्रमाणा रविनंदनेऽपि ।
नेत्रेश्वरार्कप्रमिता दिने स्युर्निशि प्रवक्ष्ये रवितस्तु हेयान् ११

विश्वैर्मितश्चापि गिरीशतुल्यो नंदप्रमाणश्च नगैः समानः ।
बाणैर्मितो वह्निमितो बुधैश्च त्याज्यः कलांशस्तिथिचंद्रतुल्यः

| र | चं | मं | बु | गु | शु | श | |
|---|---|---|---|---|---|---|---|
| ७ | १३ | ३ | ९ | १५ | ५ | ११ | अर्धयामाः |
| ८ | १४ | ४ | १० | १६ | ६ | १२ | |
| १४ | १२ | १० | ८ | ६ | ४ | २ | कुलिकः दिवा |
| ६ | ४ | २ | १४ | १२ | १० | ८ | कंटकः |
| १३ | ११ | ९ | ७ | ५ | ३ | [illegible] | रात्रौकुलिकः |
| ८ | ६ | ४ | २ | १४ | १२ | १० | कालवेला |
| १० | ९ | ६ | ४ | २ | १४ | १२ | यमघंदः |

यामदलं कुलिको भवतोऽत्र द्विज्ञकुजत्रितये क्रमतः स्युः ।
वासरतः खलु कंटकसंज्ञः कालसमः समयोयमघंदः ॥ १३ ॥
ग्रंथाननेकानवलोक्य सम्यक् संदर्भिते विठ्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुमनामधेये सद्वासराख्यं कुसुमं समाप्तम् ॥१४॥

---

( योगकुसुमम् )

योगास्तुविष्कंभमुखा निरुक्ता नवैव तेषां तु विरुद्धसंज्ञाः ।
गंडेऽतिगंडे च षडेव नाड्यः पंचैव शूले परिघार्धमाद्यम् १

तिस्रो वज्रे चादिमे नाडिकाः स्यु
स्त्याज्याः सर्वो वैधृतश्चातिपातः ।
व्याघाताख्ये नंदनाड्यस्तु हेयाः
कैश्चित्प्रोक्तश्चादिमः पाद एषाम् ॥ २ ॥

दुर्योगे साभिजिच्चांद्रं सूर्यभाद्विषमं यदि
एकार्गलः समांघ्रिस्थौ पुष्पवंतौ तदा न सन् ॥ ३ ॥

ग्रंथाननेकानवलोक्य सम्यक् संदर्भिते विठ्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुमनामधेये योगाभिधानं कुसुमं समाप्तम् ॥ ४ ॥

( तिथ्यर्धकुसुमम् )

बलक्षपक्षप्रतिपद्द्वितीयखंडात्क्रमात्स्युः करणानि सप्त ।
बवं तथा बालवकौलवे तैतिलं गरं वै वणिजं च विष्टिः १
कृष्णभूतोत्तरात्खंडात्पक्षत्यादिदलावधि ।
शकुनिः स्याच्चतुष्पाच्च नागं किंस्तुघ्नमेव च ॥ २ ॥
विष्णोस्तिथ्यामुत्तरा स्याच्चतुर्थ्यां
भद्राष्टम्यां पूर्णिमायां तु पूर्वा ।
शुक्ले कृष्णे सा तृतीयादशम्यो-
रंत्या भूते सप्तमीष्वादिमार्धे ॥ ३ ॥
हिताय नो स्यादिह मर्त्यलोके सिंहेऽलिगे कुंभयुगे च चंद्रे ।
पूर्वार्धजा चेन्निशि योत्तरार्धे दिवा भवेत्सा शुभदा शुभेषु ४
गजसप्ततिथींद्रदिक्शिवाग्न्युदधिप्रख्यतिथिष्वनुक्रमात् ।
इषुसूर्यनखोडुतः पुनर्घटिकाभ्यो घटिकात्रयं शुभम् ॥ ५ ॥

| ८/५ | ७/१२ | १५/२० | १४/२७ | १०/५ | ११/१२ | ३/२० | ४/२७ |
|---|---|---|---|---|---|---|---|

विषबंधवधाग्निशस्त्रकृत्यं महिषोष्ट्रादितुरंगमस्य कृत्यम् ।
सफलं खलु विष्टिषु प्रणीतं मुनिनेक्ष्वाकुपुरोहितेन तेन ॥६॥
ग्रंथाननेकानवलोक्य सम्यक् संदर्भिते विठ्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुमनामधेये तिथ्यर्धसंज्ञं कुसुमं समाप्तम् ॥ ७ ॥

( योगावयोगकुसुमम् )

मूलार्कपौष्णाश्व्यदितींदुचित्रा श्रुत्युत्तरेज्याः शुभदास्तु सूर्ये ।
सोमे श्रुतींद्वीज्यजलेशधातृमैत्रानिलेंद्रादितिभं धनिष्ठा ॥१॥

बुध्न्याश्विसार्पाग्निभविश्वभाग्यमैत्रेज्यपौष्णानि शुभानि भौमे ।
बुधेऽग्निमित्रेज्यरवित्रयेंदु ब्राह्मोत्तराः शस्ततराः प्रदिष्टाः २
आदित्यपुष्यांत्ययुगाच्युतत्रि सूर्यत्रिमित्राणि गुरौ शुभानि ।
भाग्यांत्ययुग्माब्जसमुद्भवेंदु मित्रोत्तराभास्करभानि शुक्रे ३
स्वातीकविष्णुत्रयपित्र्यपुष्योत्तरेंद्रशैवेंदु शनौ शुभानि ।
इमानि सर्वाण्यपि संत्यथापि पूर्वद्वये चामृतसिद्धियोगौ ४
मैत्रं वैश्वं वारुणं चाश्विनं च चांद्रं सार्पं सौरमर्कादिवारे ।
नेष्टं चाथो याम्यचित्रे च वैश्वदेवं वस्वार्यम्णकेशांकमंत्यम् ५

सूर्यर्क्षतः सप्तधृतींद्रयुग्मं ७।८।१८।१९।१४।१५।
दिक्पंचसंख्यं नखतः पराणि ।
पंचैव भानि २१।२२।२३।२४।२५ क्षितिकंपमुख्या
योगास्ततस्तेषु शुभं न कुर्यात् ॥ ६ ॥

हस्तार्कमिंद्वर्क्षदिनं शुभेषु भौमाश्विनी चापि बुधानुराधा ।
पुष्येज्यवारं भृगुरेवती च शन्यब्जजं पंचमतो विवर्ज्यम् ७
नंदा च भौमार्कदिनेऽथ भद्रा शशांकभृग्वोश्च जया बुधेऽपि ।
रिक्ता गुरौ मंददिने च पूर्णा शुभा वसिष्ठस्य मते हि तिथ्यः ८
गुर्वह्नि पुष्यः शनिरोहिणी च भौमाश्विनी चापि सुसिद्धयोगाः
विवाहयात्रागृहसंप्रवेशे क्रमेण नेष्टा मुनिभिः प्रदिष्टाः ॥९॥
मृत्य्वादियोगान् संति चंद्रवीर्ये शुभाश्च यामोत्तरमाहुरन्ये ।
यात्रां विनान्ये कुदिने सुयोगः सिध्यैदिनार्धात्कुदिनं च शस्तम्

भानुः सप्तम्यां बुधे पक्षतिश्चेद्
योगो वारस्यापि तिथ्याश्च यत्र ।

रामक्ष्मा १३ भिः संमितो जायते चेत्
कार्ये सर्वस्मिन् दिनं तच्च निन्द्यम् ॥ ११ ॥

वारर्क्षजातास्तिथिवारजातास्तिथ्यर्क्षवारप्रभवाः कुयोगाः ।
वंगेषु हूणेषु खशेषु वर्ज्या अन्येषु देशेषु च ते प्रशस्ताः ॥१२॥

सूर्येऽश्विन्याश्चंद्रवारे मृगाच्च
भौमे सार्पाच्चंद्रपुत्रेऽपि हस्तात् ।
मैत्रादीज्ये भार्गवे वैश्वदेवा-
न्मंदेऽप्येते वारुणाः स्युः क्रमेण ॥ १३ ॥

आनंदः कालदंडश्च धूम्राख्योऽथ प्रजापतिः ।
सौम्यध्वांक्षौ ध्वजश्चैव श्रीवत्सो वज्रमुद्गरौ ॥ १४ ॥
छत्रं मैत्रो मानसश्च पद्मो लुंपक एव च ।
उत्पातमृत्युकाणाश्च सिद्धिः शुभसुधाभिधौ ॥ १५ ॥
मुसलं गदमातंगराक्षसाश्च चरस्थिरौ ।
वर्धमाननामफला अष्टाविंशतियोगकाः ॥ १६ ॥
ग्रंथाननेकानवलोक्य सम्यक् संदर्भिते विठ्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुमनामधेये योगावयोगं कुसुमं समाप्तम् ॥१७॥

---

( मुहूर्तकुसुमम् )

रौद्रः कुंडलिमित्रपित्र्यवसुवाविंश्वेऽभिजित्कस्वरीद्र्
द्वीशा राक्षसनीरपार्यमभगाः प्रोक्ता मुहूर्ता दिने ।
रौद्रोऽजांघ्रिभंतोऽष्टचादितिगुरू विष्णू रविस्त्वष्ट्को
वायू रात्रिषु भोक्तमेषु च मितिस्तिथ्यंशकोऽहर्निशोः ॥ १ ॥

---

१ स्वरीद्र्-इन्द्रः- । २—अजांघ्रिभतः क्रमेणमृगांतमध्यौ ।

[१४]मनुं, [१२]रवि[९]खगोन्मितं, [४]श्रुतिमितं, क्षणं चाष्टमं, ।
तथा [१२]रवि[६]रसोन्मितं, [४]श्रुति[९]खगौ, [२]द्वि[१]चंद्रोन्मितौ ।
रविप्रभृतिवासरे त्वथ सितेंदुरात्र्यष्टमं ।
कुजस्य निशि सप्तमं परिहरेच्छुभार्थी बुधः ॥ २ ॥

| र. | चं. | मं. | बु. | गु. | शु. | श. | |
|---|---|---|---|---|---|---|---|
| १४ | १२ | ४ | ८ | १२ | ४ | २ | |
| | ९ | | | ६ | ९ | १ | दिवा |
| | ८ | ७ | | | | | रात्रौ |

ग्रंथाननेकानवलोक्य सम्यक् संदर्भिते विठ्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुमनामधेये मुहूर्तसंज्ञं कुसुमं समाप्तम् ॥ ३ ॥

( नक्षत्रकुसुमम् )

( नक्षत्रपतयः )

दस्रयमाग्निविधातृशशांकाः शूलधरादितिपूज्यभुजङ्गाः ।
स्युः पितरो भगकोऽर्यमसूर्य त्वष्टृसदागतयः सुरपाग्नी ॥१॥
मित्रसुरेश्वरराक्षसनीरं विश्वविधी भगवान् वसवश्च ।
नीरपतिस्त्वजपादथ बुध्न्यो दस्रमुखप्रभवोऽपि च पूषा ॥२॥

( नक्षत्रवाराणां ध्रुवादिसंज्ञा )

उत्तरात्रययुता च रोहिणी सूर्यवासर इदं ध्रुवं स्थिरम् ।
मारुतं श्रवणतस्त्रयं तथादित्यमिंदुदिनकं चरं चलम् ॥ ३ ॥
पूर्वात्रयं स्याद्भरणी मघेति क्रूरं तथोग्रं च महीजवारः ।
द्विदैवतं कृत्तिकया समेतं बुधश्च साधारणकं च मिश्रम् ४
अभिजिद्गुरुभं करोऽश्विनी लघु च क्षिप्रमिदं गुरोर्दिनम्
मृगपूषभमित्रभं तथा मृदु मैत्रं च सचित्रकं भृगुः ॥ ५ ॥
आर्द्रा मूलं सार्पमैंद्रं शनिश्च प्रोक्तं तीक्ष्णं दारुणं चापि विद्धि ।

कार्यं कर्मैतेषु नाम्ना समानं यन्न प्रोक्तं स्पष्टवाक्येन चात्र ॥६॥

( नक्षत्राणामूर्ध्वमुखादिसंज्ञा तत्कार्यंञ्च )

साधारणोग्राहिभमूलमुक्तमधोमुखं पुष्यहरित्त्रयं च ।
ध्रुवार्द्रमूर्ध्वास्यमथादितींद्र कराश्विवातं मृदुतिर्यगास्यम् ७
वापीतडागादिविधेर्विधानमधोमुखैर्भैरथ तिर्यगास्यैः ।
तुरंगगोहस्तिहलादिकं स्यादूर्ध्वाननैश्छत्रगृहादि कार्यम् ॥८॥

( वस्त्रादिधारणम् )

उत्तराश्विभपुनर्वसुद्वये रोहिणीषु करपंचकेऽन्त्यभे ।
वासवे शुभतनौ बुधत्रये वस्त्रधारणमरिक्तके तिथौ ॥ ९ ॥
रेवतीद्वयकरादिपंचके वासवे रविकुजेज्यभार्गवे ।
काचशंखमणिवस्त्रधारणं भूषणं च कुरुतात्सुवासिनी ॥१०॥
अदितिद्वययुक् च रोहिणी नववस्त्रादिधृतौ तथोत्तराः ।
न शुभाय सुवासिनीजने ह्यपि च स्नानविधौ जलेशयम् ११
दैर्घ्यं त्रेधा संविभज्यांशुकानां मध्यं भागं कज्जलाद्यैर्विलिप्तम् ।
दग्धं छिन्नं नेष्टमाहुस्तथांते सर्वत्रैवं शय्यकापादुकादौ ॥१२॥
राज्ञार्पिते प्रेमसमर्पिते च दत्ते विवाहेऽवनिदेवमत्याम् ।
निंद्ये तिथौ वारभयोगलग्ने धार्यं हि वासोऽपि च भूषणानि
वसुदस्रकरादिपंचकेऽदितियुग्मेऽशुकधारणं शुभम् ।
त्यज मंदबुधौ च पर्वरिक्ता अथ षष्ठी पितृवासरं च विद्वन् ।

( गवांक्रयविक्रयौ )

पौष्णद्वये चादितिभद्वये च वसुद्वये शक्रकरद्विदैवे ।
क्रयो गवां विक्रयकश्च शस्तः कैश्चित्तु पूर्वास्तृपमित्रचांद्रे १५
त्वष्टृध्रुवश्रीपतिदर्शरिक्ता भौमाष्टमीभिर्न पशुप्रवेशः ।

यानं स्थितिश्चाप्यवनं सुलग्नेऽष्टमस्य शुद्धौ निजयोनिभे स्यात्

( गजाश्वकृत्यम् )

चरलघुमृदुभैः स्यात्सर्वमातंगकृत्यं
लघुवसुयुगले चादित्यसौम्यानिलांत्ये ।
कुरु हयवरकृत्यं सूर्यभात्पंचचंद्रा-
ण्युडुयुगमपि पश्चात्साभिजित्संपदे स्युः ॥ १७ ॥
गजाभिधानर्क्षतऋक्षषट्के दशग्रहे तत्त्वचतुष्टये च ।
सौरिः स्थितश्चेत्स गजो नृपस्य जयाय युद्धे स्वरशास्त्र एवम् ।

( सूचीकर्मविपणि—विक्रयाः )

अदितिवसुमृगाश्वित्वष्टृमैत्रेषु सूची—
कृतिरथ घटरिक्ताभौमहीने दिनेऽपि ।
तनुगतसितचंद्रे द्व्यायखांगे २।११।१०।१शुभे स्या—
द्विपणिररविपापे क्षिप्रमित्रध्रुवैर्भैः ॥ १९ ॥
उग्रमिश्रभुजगैर्विंसघैः षट्
त्र्यायगैः ३।११ खलखगैः शुभखेटैः ।
केंद्रकोणधनगै १।४।७।१०।९।५।२ र्धनदः स्यात्
विक्रयस्त्यज घटं कुजरिक्ते ॥ २० ॥

( लोहशस्त्रघटनादिकर्म )

मिश्रदारुणमृगोग्रहयर्क्षैर्लोहशस्त्रघटनं शुभकृत्स्यात् ।
मित्रचांद्रवसुभादितिचित्रा दस्रभेंऽशुकजचर्मधृतिः स्यात् २१

( रौप्यादिमुद्राघटनम् )

ध्रुवैर्मृदुक्षिप्रचरैर्विसौरचांद्रे दिने पूर्णजये तिथौ च ।
लग्ने शुभे चाभ्युदिते कवीज्ये रौप्यादिमुद्राघटनं प्रशस्तम् ।

( प्रतिवर्षं नवान्नप्राशनम् )

चरमृदुलघुभैः सल्लग्नके चैत्रपौष—
क्षितिजरविजनंदाक्ष्वेडनाडीर्विहाय ।
प्रतिसमनवजातान्नस्य सत्प्राशनं स्याद्
ध्रुवगणसहितैस्तैः कांस्यपात्रादिभोज्यम् ॥ २३ ॥

( पादुकादीनामुपभोगः, भूषणनिर्माणञ्च )

स्थिरमृदुहरिशक्रोष्णांशुसौम्यादितीज्ये
स्थिरसुखशयनानां पादुकानां च भोगः ।
स्थिरचरलघुभैः स्यान्निर्मितिर्भूषणानां
भवति निखिलवारे पुष्कराख्येऽपि योगे ॥२४॥
यदि भवति च रत्नाद्योग्रतीक्ष्णोनभैः सा
रविकुजदिनलग्ने सा यदा मौक्तिकाद्या ।
मृदुलघुचरमंदैः शुक्रचंद्रेऽपि लग्ने
तिथिषु भवति रिक्तामाविहीनासु सर्वा ॥ २५ ॥

( त्रिपुष्करयोगः )

भद्रातिथौ शनिकुजार्कदिनं च मिश्र—
विश्वार्यमाजचरणादितिभानि चेत्स्युः ।
योगस्त्रिपुष्कर इति त्रिगुणत्वकारी
वस्विंदुतक्षभयुते द्विगुणः क्षयर्ध्योः ॥ २६ ॥

( कुंभमीनस्थे चंद्रे कर्तव्यनिषेधः )

घटद्वये सर्पति यामिनीशे शय्यावितानं गृहगोपनं च ।
प्रेतस्य कार्यं यमदिग्गमं च कुर्यान्न काष्ठतृणसंग्रहं च ॥२७॥

( रोगोत्पत्तितः शुभाशुभज्ञानं दिनसंख्या च )

पूर्वात्रये रुद्रमहेंद्रसार्पे वायौ रुजा चेन्नहि जीवनं स्यात् ।

मैत्रे सपौष्णे बहुसंकटाच्च मासाच्च वैश्वे विरुजित्वमिंदौ २८
पित्र्ये नखैः पक्षदिनाच्च हस्ते वसुद्विदैवेऽप्यथ वह्निदास्रे ।
मूलेंऽकतो याम्यजलेशविष्णुत्वाष्ट्रेषु रुद्रैरथ बुध्न्यसंज्ञे २९
आदित्यपुष्यार्यमधातृभेषु रोगाद्विमुक्तिः किलसप्तरात्रात् ।
चेदत्र ताराविधुरप्यनिष्टः कष्टं विशिष्टं दुरहस्तिथिश्चेत् ३०
मैत्रार्द्राग्नियमैंद्रपाशिवसुभार्यम्णं भगो नाडिका—
दित्याश्वीनमघाद्विदैवहरिकाजांघ्र्यस्त्रपं चापरा ।
पुष्यत्वष्ट्रयुगांत्यनीरभुजगाहिर्बुध्न्यचांद्रं परा
वैश्वं चेदिह रोगिचंद्रविभं नाड्यां तदा स्यान्मृतिः ॥३१॥

( भेषजसेवनम् )

चरलघुमृदुमूले द्व्यंगलग्ने सितेज्ये ।
विदि शशिनि च तेषां वासरे भास्कराह्नि ।
व्ययमदमृतिशुद्धौ सत्तिथौ जन्मभोने
बलवति शुभखेटे भेषजं सद्वदंति ॥ ३२ ॥

( रोगनिर्मुक्तिस्नानम् )

चंद्रे विरुद्धे विकवींदुवारे चरोदये दुर्युजि रिक्ततिथ्याम् ।
ध्रुवांत्यसार्पादितिवायुपित्र्यहीनोडुभिः स्नातु नरो रुजान्ते ३३

( सर्पदंशः )

सार्पद्वये मूलशिवांतकेषु मिश्रेषु नाशाय भुजंगदंशः ।

( लतादिरोपणम् )

मृदुध्रुवक्षिप्रजलेशमूलराधासु कार्यो हि लतादिरोपः ॥३४॥

( जलाशयः )

तोये मृगे वारुणभे मघायां
मित्रांत्यपुष्यध्रुववासवार्के ।

गुरौ बुधे वापि तनौ भृगौ रवे
जलर्क्षगेंदौ सलिलाशयः स्यात् ॥ ३५ ॥
रविभौमतिथिक्षयाँश्च रिक्तामजासिंहालितनूर्विहाय कुर्यात् ।
खननं तु जलाशयस्य विद्वानधरास्यैरथवोडुभिः सुचन्द्रे ३६

( नृत्यगायने )

वसुद्वयेन्द्रेन्दुकरान्त्यपुष्य–मित्रोत्तराभिः कुरु नृत्यगेये ।
ज्ञराशिगेऽब्जेऽपि बुधे विलग्ने पूज्ये न दृष्टे हिबुके शुभैश्च ३७

( नृपदर्शनम् )

मृदुध्रुवक्षिप्रहरिद्वये स–नृपेक्षणं सूर्यदिने—

( धर्मकर्म )

ऽथ धर्मः ॥
चरध्रुवक्षिप्रगणेऽपिमैत्रे लग्ने बले ज्ञस्य गुरोश्च वर्गे ॥ ३८ ॥

( कवचशरकृपाणीधारणम् )

ध्रुवमृदुलघुशाक्रादित्यभेऽपि द्विदैवे
गुरुभृगुरविवारेंऽगे ध्रुवे सत्तिथौ सत् ।
कवचशरकृपाणीधारणं—

( मद्यसेवनम् )

चाथ तीक्ष्णे
शतभिषजि तथोग्रे मद्यमुक्तं पुराणैः ॥ ३९ ॥

( धनुर्विद्या )

यमद्वये चादितिभद्वये च हस्तत्रये विष्णुयुगेंऽत्यमूले ।
मृगे ध्रुवे पित्र्ययुगे विपौषे विष्णुप्रबोधे खलु चापविद्या ४०

( नक्षत्राणामंधादिसंज्ञा तत्फलं च )

अंधं च मंदेक्षणमल्पनेत्रं
सुलोचनं साभिजितामुडूनाम् ।
विधातृभात्स्याद् गणना गतस्य
लाभोंऽधयुग्मे न परद्वये स्याद् ॥ ४१ ॥

( नष्टादिधनं लभ्यं न वेति )

ध्रुवोग्रसाधारणदारुणे भे पाते च विष्ट्यां विनिवेशितं यत् ।
दत्तं प्रयुक्तं त्वथवा विनष्टं द्रव्यं न लभ्यं धनकेन तद्धि ४२

( धनसंप्रयोगऋणच्छेदधनसंचय (व्याजुं) विचारः )

दास्रे विशाखाचरपुष्यमैत्रे चरे विलग्ने धनसंप्रयोगः ।
मृतित्रिकोणे विमले बुधे नो देयं कुजे ग्राह्यमृणं न वृद्धौ ४३
संक्रांतिवारे करभे भरण्यां सूर्यस्य वारे न ऋणं शुभाय ।
कुजे ऋणच्छेदमुदाहरंति बुधे तु वित्तस्य चयं मुनीन्द्राः ४४

( स्वामिसेवनविचारः )

क्षिप्रे च मैत्रेऽर्कबुधत्रयाह्नि शुभे विलग्ने दशमायगेऽर्के ।
कुजे च राशीश्वरयोनिमैत्र्यां प्रभुः सुसेव्यः किल सेवकेन ४५

( शिल्पादिविद्या )

मृदुध्रुवक्षिप्रचरे गुरौ ज्ञे लग्नास्पदेऽब्जे बुधजीववर्गे ।
शिल्पादिविद्या—

( संधिः )

त्वथजीवमित्र—

भाग्येषु सौम्याहनि सन्धिरुक्तः ॥ ४६ ॥

( मैत्रीकरणम् )

द्वादश्यां च तथाष्टम्यां तैतिले करणे शुभम् ।
शुक्रदृष्टतनौ प्रोक्तं नृणां मैत्रीकृतेर्दिनम् ॥ ४७ ॥

( कृषिकर्म-बीजरोपणम् )

चरध्रुवक्षिप्रमृदुद्विदैवमूलेषु पित्र्ये कृषिकर्म शस्तम् ।
रिक्ताष्टषष्ठीचरलग्नकुंभसिंहार्किभौमार्कदिनं विहाय ॥ ४८ ॥

बलिनि शशिनि शुक्रे चन्द्रमस्याप्यराशौ
तनुगतसुरपूज्ये निर्बलैः पापखेटैः ।
कृषिरथ रवियुक्ताद्भाद्भैंखत्रिप्रमाणाद्
गजपरिमितभं सन्नारदाद्यैः प्रणीतम् ॥ ४९ ॥

मृदुध्रुवक्षिप्रमरुद्धनिष्ठामघासु मूलेऽखिलबीजवापः
आर्द्राप्रवेशाद्दिनकत्रयं च भौमं कुलग्नं परिहाय कार्यः ५०

राहुभादष्ट यावच्च रविर्भूपनखोन्मितम् ।
जिनांच्चतुष्टयं भानां बीजवापे न शोभनम् ॥ ५१ ॥

( धान्यच्छेदनम् )

पूषाश्विनीब्रह्मभगद्विदैवमित्रं तथादित्यजलेशभे च ।
मंदाररिक्ताः परिहृत्य कार्या धान्यच्छिदाद्व्यंगचरं विलग्नम् ५२

( कणपीडनम् )

मघात्रये शाक्रयुगे विधातृमैत्रांत्यकर्णे कणपीडनं सत् ।

( सस्यरोपः )

मूलार्यमद्वीशकपाशियुग्मे सस्यस्य रोपः शुभसूर्यवारे ॥५३॥

( अन्नसंचयः )

क्रूरमिश्रशिवशक्रभुजंगान् कर्कमेषघटकानपि हित्वा ।
सद्दिनेऽन्नधृतिरीज्यचरेंद्रत्र्युत्तरद्विपकभाश्विषु वृद्धिः ॥५४॥

( नौकाघटनम् )

चरे त्रियुगम्यां मृदुमूलभेषु क्षिप्रेषु शुक्रेज्यदिनेशवारे ।

 

शुभे विलग्ने सति चंद्रवीर्ये शुभाय नौकाघटनं प्रणीतम् ५५

( नौकासंचालनम् )

हरित्रये मृगेऽश्विभे भगानुराधयोस्तथा ।
तिथींदुवासरे शुभे तरीप्रचालनं जले ॥ ५६ ॥

( नौकाप्रयाणम् )

मृगेऽच्युतद्वये लघुत्रिपूर्विकासु मित्रभे ।
तिथीन्दुतारके शुभे शुभेऽह्नि नौगमः शुभः ॥ ५७ ॥

( विरेचन-वांत-रुधिरस्रावाः )

त्वष्टृमित्रकभतो युगेंऽबुपे वैप्लवे लघुनिभे गुरौ रवेः ।
भूमिजस्य च दिने विरेचनं वांतमस्रमचिरात्तनोति शम् ५८

( वीराभिचारः )

पित्र्यैंद्रमूलांतकशंभुभेषु लग्ने घटे ज्ञे सुखगे च शुक्रे ।
शुद्धेऽष्टमे भानुमहीजवारे वीराभिचारप्रभवा हि सिद्धिः ५९

( दिव्य-शपथ-परीक्षा )

मंदारवारे स्थिरलग्नके च खलोदये चंद्रसितेज्यमौढ्ये ।
सूर्येऽष्टमे मास्यधिके न कुर्याद्दिव्यं कृतं चेद्विपरीतकारि ६०

( शांतिक-पौष्टिककर्म )

चरध्रुवक्षिप्रमघाविशाखाद्र्यंत्येषु शान्तिः सह पौष्टिकेन ।
विधौ सुखेऽर्के दशमे गुरौ च तनौ सदा स्यात्सति कारणे च ६१

( होमाहुतिविचारः )

दिनेशभात्त्रित्रिभयायिचन्द्रे
सूर्यज्ञशुक्रार्किशशांकभौमाः ।

गुरुस्तमश्चापि शिखी विभुः स्यात्
खले विभौ होमविधिर्न शस्तः ॥ ६२ ॥

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| २ | २ | २ | २ | २ | २ | २ | २ | २ |
| र | बु | शु | श | चं | मं | गु | रा | के |
| ने | श्रे | श्रे | ने | श्रे | ने | श्रे | ने | ने |

( वह्निवासः )

शुक्लादितः सैकतिथिर्दिनाढ्या
वेदै ४ र्हृता चेद्गुण ३ शून्य०शेषे ।
अग्नेर्निवासो भुवि सौख्यकारी
शशि १ द्वि २ शेषे न सुखस्य लेशः ॥६३॥

( कार्यसिद्धिः )

व्ययाष्टशुद्धोपचये विलग्ने चन्द्रे चये सिध्यति कार्यजातम् ।

( मरणक्रिया )

हरीन्द्रमूलेशभुजंगवायुक्षिप्रेषु कृत्यं परलोकगानाम् ॥ ६४ ॥

( मूलादिनक्षत्रजातस्य शुभाशुभफलम् )

मूलस्य पादत्रितये विरुद्धं पितुर्जनन्याश्च धनस्य जन्म ।
चतुर्थकोंऽघ्रिः शुभदो निरुक्तः सार्पे विलोमं फलमाहुरार्याः ६५

ज्येष्ठांतिमैका घटिका तथैव
मूलादिमं स्याद् घटिकाद्वयं च ।
अभुक्तमूलं परिचक्षतेऽन्ये
शाक्रेषु ५ नाड्योऽष्ट ८ च मूलजाता ॥ ६६ ॥

अन्ये द्वयोरत्थं घटिकायुगं ४ च जातः शिशुस्तत्र विवर्जनीयः ।
विलोकयेद्वा न पिताष्टवर्षं तदाननं चेन्न कृता हि शान्तिः ६७

---

१ खले तु–होमो न कार्यः शुभवांछितेन ६२ इ. पाठांतरम्..

आद्यः पादो मूलजो रात्रिभागे
तातानिष्टं नो दिने चेद्द्वितीयः ।
मातू रिष्टं नो सदा शांतितो नो
सा शौचान्तेऽव्दे त्रिमासेऽपि तद्वे ॥ ६८ ॥
मूलद्रुमे षड्गुणिता घटीभ्यः ३६
त्रिःसप्त २१ संख्याघटिकाः शुभाय ।
आद्यास्तु पंचैव रवे १२ रवि १२ श्च
भेभ्योऽ२७पि भैः २७ सप्तमिता नरे स्युः ॥६९॥
नभश्चैत्रोर्जपौषेषु भूमावन्येषु लोकयोः ।
भूमिस्थं दोषवहुलमल्पमन्यत्र संस्थितम् ॥ ७० ॥

( पुष्यप्रशंसा )

क्रूरेण विद्धोऽप्यथवा युतोऽपि तारेन्दुवीर्येण विवर्जितोऽपि
पुष्यो विवाहोनितकार्यसिद्धयै भवेत्परोत्थानपि हन्ति दोषान्

( नक्षत्राणां स्वरूपाणि )

अश्वास्यं च भगः क्षुरश्च शकटश्चैणास्यमुद्यन्मणि—
गेहं सायकचक्रगेहशयनं पर्यंकहस्तौ तथा ।
मुक्तारक्तमणिः सुतोरणवलीसत्कुंडलं केसरी
शय्यादंतिरदस्त्रिपान्मुरजखे शय्यायुगं मर्दलः ७२
त्र्यस्रोऽभिजिद्रूपमिदं नु भानां
खमध्यभाग्भास्करभं हि यावत् ।
गण्यं नँगोनं नखँसंगुणं च
नवोद्धृतं शेषनिशं वदन्ति ॥ ७३ ॥
कर्को विश्वजिनैः खमध्यकगते दस्रद्वये केसरी
नंदैरंककुभिश्च वह्नियुगुले कन्याहिमांशुर्मृगे ।

शकैः सैव शिवेऽदितौ गुणमितैर्जूकश्च शकैर्गुणे—
भौजंगे तु घनैरलिर्वसुमितैः पित्र्ये घनैर्भाग्यभे ७४
आर्यम्णे धनुरंगकैर्नखमितैर्हस्ते जिनैस्त्वष्टृभे
स्वातौ वेदमितैर्मृगो धृतिमितैर्द्वीशे तु मैत्रत्रये ।
द्वाभ्यां दंतिभिरंगलोचनमितैः कुंभो जले विश्वभे
तिथ्यंशैर्नयनाश्विभिश्च शफरो वेधे तु भागैर्जिनैः ७५
मेषो घनैरच्युतभे वृषादिः स्याद्वासवे वारुणभे तु जित्मः (?)।
शरैश्च पूर्वासु शिवैश्च बुध्न्ये कर्कादिरंत्ये तु युगैश्च कर्कः ७६

( नक्षत्राणां तारासंख्या )

एका तारा स्वातिचित्रेशभानां पूर्वाणां चाप्युत्तराणां त्रयस्य
तारे स्यातां विष्णुजीवाभिजिद्धचंद्रेंद्राश्विन्यंतकानां च तिस्रः
द्विदैवते वासवमित्रयोश्चा—दित्ये चतस्रः कररोहिणीषु ।
मघोरगे पंच षडग्निभेंऽत्ये दंताः शतेशा वरुणर्क्षमूले ॥७८॥
ग्रंथाननेकानवलोक्य सम्यग् सन्दर्भिते विठ्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुममनामधेये नक्षत्रसंज्ञं कुसुमं समाप्तम् ॥ ७९ ॥

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | अ | भ | कृ | रो | मृ | आ | पु | पु | अ | म | पू | उ |
| रा | ३ | ३ | ४ | ४ | ५ | ५ | ६ | ६ | ६ | ७ | ७ | ८ |
| शिः | १३ | २४ | ९ | १९ | १ | १४ | ३ | १४ | १७ | ८ | १७ | ६ |
| ताराः | ३ | ३ | ६ | ५ | ३ | १ | ४ | ३ | ५ | ५ | २ | २ |
| | ह | चि | स्वा | वि | अ | ज्ये | मू | पू | उ | अ | श | ध |
| रा | ८ | ८ | ९ | ९ | १० | १० | १० | ११ | ११ | ११ | ० | १ |
| शिः | २० | २४ | ४ | १८ | २ | ८ | २६ | १५ | २२ | २४ | १७ | ० |
| ताराः | ५ | १ | १ | ४ | ४ | ३ | ११ | २ | २ | ३ | ३ | ४ |

| | श | पू | उ | रे |
|---|---|---|---|---|
| राशिः | २ | २ | ३ | ३ |
| | ५ | ११ | ० | ४ |
| ताराः | १०० | २ | २ | ३२ |

## ( संक्रांतिकुसुमम् )

### ( संक्रांतीनां घोरादिसंज्ञाः तत्फलानि च )

संक्रांतिरुग्रेऽर्कदिने ऽपि घोरा ध्वांक्षी लघौ चन्द्रमसो दिनेऽपि
महोदरी भौमचरे प्रदिष्टा मंदाकिनी ज्ञे मृदुभे स्थिरेऽज्ये १

मन्दाथमिश्रे भृगुजे च मिश्रा
शनौ च तीक्ष्णोडुनि राक्षसी स्यात् ।
शूद्रान् विशश्चौरजनान्नृपालान्
विप्रान् पशूनन्त्यजनान् धिनोति ॥ २ ॥
त्रेधा विभक्तस्य दिनस्य मध्ये
पूर्वे तथांत्येऽस्तमिते द्विजादीन् ।
तथा निशायाः प्रहरेषु भूतान्
निशाचरान् हन्ति नटांश्च गोपान् ॥ ३ ॥
पाखंडिलोकं च दिनोदयेऽथ
संक्रान्तिरर्कस्य शुभाह्नि चेत्स्यात् ।
क्षेमाय पापाऽह्नि च दुःखदात्री
जन्मोडुजाता न सुखस्य कर्त्री ॥ ४ ॥

### ( संक्रांतीनां पुण्यकालविचारः )

गोकुंभालिमृगाधिपेषु घटिकाः पूर्वा नृपैः १६ संमिता
द्वन्द्वस्त्रीधनुरंडजेषु च परास्तावंत्य १६ एवानघाः ।

मेषे तौलिनि दिङ्मितां उभयतस्त्रिंशत्तु पूर्वाः स्मृताः
कर्केऽन्त्यास्तु नखा मृगे द्विगुणिताः कैश्चित्स्मृताः सूरिभिः ५

( कर्कमकरयोर्विशेषः )

अर्वाक् सा रजनीदलात्प्रथमकाह्नोऽत्यं सुपुण्यं दलं
तस्माच्चेत्परतः परं दिनदलं पूर्णे निशीथे द्वयम् ।
अस्ताच्चेत्परतो मृगः परदलं सूर्योदयात्पूर्वतः
कर्कश्चेत्प्रथमोत्तरार्धमयने स्नानादि रात्रावपि ॥ ६ ॥
पुण्याः सन्निहिता विशिष्टफलदा नाड्यो रविः सायनो
यस्मिन् स्यात्तु निरभ्रकोऽहनि बुधैः प्रोक्तं दिनं पुण्यकृत् ।

( चंद्रादीनां पुण्यकालः )

चंद्रात्पादयुता घटी, युगमिता,स्तिस्रः सपादा, युगं
सार्धं, वेदमिता, द्विवारणमिताः, खेटक्रमे पुण्यदाः ॥ ७ ॥

( ववादिकरणपरत्वे संक्रांतिस्वरूपं )

श्वेतांबरान्नं च भुनक्ति बाला सिंहोपविष्टा दधती भुशुंडीम् ।
पुन्नागमाला किल देवजातिः कस्तुरिभाला ववसंक्रमे स्यात् ८
पीतांबरा पायसमत्ति धत्ते गदां च जातीकुसुमोत्थमालाम् ।
व्याघ्रोपविष्टा मृदुकुंकुमार्द्रा भूता कुमारी किल बालवेऽपि ९

नीलांबराऽसिं दधती वराह-
वाहा सुपाटीरधरा च सर्पा ।
भैक्षाशनोर्ध्वा वयसा च मुग्धा
सा कौलवे स्याद् वकुलालिमाला ॥ १० ॥

पक्वान्नभोक्त्री खरयाः प्रसुप्ता भाले मृदं केतमिमाल्यमंगे ।
करे च दंडं दधती सुपांडुवासा विहंगी तरुणी चतुर्थे ॥ ११ ॥

रक्तांबरा मत्तगजोपविष्टा दुग्धं पिबेद्रोचनधारिणी च ।
धनुर्धरा विल्वदलैकमाला प्रौढा च गौः स्यात्करणे गरे च १२
कृष्णांबरा तोमरधारिणी च मृगीयजातिर्महिषोपविष्टा ।
दध्यत्ति यावं दधती प्रगल्भा ह्यर्कप्रसूर्ना वणिजोद्भवेयम् १३
श्यामांवरा चित्रितमन्नमत्ति द्विजा च वृद्धा तुरगोपविष्टा ।
मार्जारदर्पान्वितभालदेशा दूर्वांश्च कुंतं दधतीह विष्टौ १४
चित्रांवरोर्ध्वा गुडमत्ति पाशं धत्ते हरिद्रातिलकं च वंध्या ।
अब्जालिमालाऽश्वगता नृपाला संक्रांतिरेषा शकुनौ सुवेशा १५
अजप्रसुप्तांकुशधारिणी च मध्वत्ति वैश्यांजनभालदेशा ।
सन्मल्लिका कंवलसंप्रवीता सुप्ता च वन्ध्या चतुरंघ्रिजेयम् १६
गोवाहनास्त्रं दधती च शूद्रा नग्नात्ति चाज्यं सुतकांक्षिणी च
सुप्ता च कृष्णागुरुभालदेशा नागोद्भवा पाटलिपुष्पमाला १७
कर्पूरलेपात्ति च शर्करां सा मेघाभवासाः शरधारिणी च ।
सन्न्यासिनी कुक्कुटया जपाढ्या किंस्तुघ्नजा संकरभूस्तथोर्ध्वा ॥

( संक्रांतितो महर्घसमर्घादिविचारः )

यद्वाहनाद्यंशुकभोज्यमेतन्महर्घमेतत्कृतजीवनानाम् ।
नेष्टं, तथोर्ध्वाशयिता निविष्टा श्रेष्ठा च नेष्टा समकार्घवृद्धौ १९

( संक्रांतिमूर्तयः )

(४५) बृहद्ध्रुवादित्यविशाख,मार्द्रा
सार्पांबुपेंद्रानिलयाम्यसंज्ञम् ।
जघन्य (१५) मन्यानि समानि (३०) चेत्स्यात्
संक्रांतिरिंद्वीक्षणमत्रवापि ॥ २० ॥

तदासमर्घत्वमहार्घसाम्यं धान्यादिके स्यादथ भास्करादेः ।

वीर्यान्नृपेक्षा सकलं च युद्धं विद्यात्रिवाहो गमनं च दीक्षा २१

( संक्रांतिनक्षत्रतः समर्घादिविचारः )

चेत्पूर्वसंक्रांतिभतो द्वितीय—
संक्रांतिभं भू १ यम २ वह्नि ३ तुल्यम् ।
तदा समर्घं यदि वेद ४ बाण ५—
तुल्यं महर्घं न शुभाय षष्ठ ६ म् ॥ २२ ॥

( चंद्रवशाद्रविसंक्रमफलम् )

यादृशश्चंद्रबलेन रवेः स्यात्संक्रमणं फलमत्र च तादृक् ।

( ताराबलाच्चंद्रबलं तस्माद्रविबलं तस्मादन्येषां बलं )

तारकया च शशी शशिनेनस्तद्बलतस्तु खगा बलवन्तः २३

( संक्रांतिचक्रवशाच्छुभाशुभफलम् )

संक्रांतिपूर्वर्क्षत एव गण्यं त्रिकं च षट्कं च पुनः पुनर्भम् ।
स्वभं त्रिके चेच्छ्रमदुःखदं तत् षट्के पुनः सर्वसुखाय च स्यात्

( संक्षेपतः क्षयाधिकमासज्ञानम् )

द्विसंक्रमः स्यात्क्षयमाससंज्ञोऽ—प्यसंक्रमश्चेदधिकत्वमेति ।
सार्धैरदैर्माभि ३२।१५ रयं क्षयश्च कदाचिदूर्जत्रितयेऽभ्युदेति
एकैर्दर्शान्तश्च मासः प्रदिष्टस्त्वन्यैर्भानोर्मंडलान्तः प्रदिष्टः ।
चेत्संक्रांतिः स्यान्मतद्वंद्वकेऽपि मूढो मासो ब्रह्मसिद्धांत एषः
ग्रंथाननेकानवलोक्य सम्यक् सन्दर्भिते विठ्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुमनामधेये संक्रांतिसंज्ञं कुसुमं समाप्तम् ॥ २७ ॥

---

( गोचरकुसुमम् )

सर्वे लाभे त्र्यंगखे[३,६,१०] भानुरिन्दुः
सांस्तांघे ज्ञो रिःफहीने समे सत् ।

ईज्यः कोणं[२]द्वयंस्तगोऽस्तारिखोनः
शुक्र[३]स्त्र्यंगे [६]भौममन्दत्रयं च ॥ १ ॥

( जन्मराशितो रव्यादीनां फलानि )

( रविः )

पंथा हानिः श्रीश्च रुग्दैन्यसौख्ये
यानं रोगः पापसौख्ये धनं रुक् ।

( चंद्रः )

अन्नं हानिः श्रीरुगार्ती धनं श्रीः
पीडा भीतिः सौख्यलाभौ च पीडा ॥ २ ॥

(भौमः)

भीतिर्हानिः श्रीश्च वैरं रुगायौ
नीतिः क्षैण्यं पापरोगौ सुखं शुक् ।

( वुधः )

बन्धो लाभो भीर्धनं शोकवित्ते
क्षैण्यं वित्तं रोगभोगौ सुखार्ती ॥ ३ ॥

( गुरुः )

भीतिर्वित्तं रुग् व्ययो लाभशोकौ
सौख्यं पीडा मानदैन्ये धनं रुक् ।

( शुक्रः )

सौख्यं वित्तं वित्तसौख्ये सुखार्ती
वैरं सौख्यं धर्मदुःखायलाभाः ॥ ४ ॥

( शनिः )

भीः शोकः श्रीर्दुःखहानी सुखं भी-
र्दुःखं पापं शुक् धनं पापमर्कात् ।

अर्धश्लोकाद् ज्ञेयमेतत्फलं स्व-
राशे राहोर्मंदवच्चापि केतोः ॥ ५ ॥

( सूर्यादीनां वेधविचारः )

त्र्यंके खके सुतभवेंऽत्यरिपौ रवेः स्याद्
३, ९। १०, ४। ५, ११। १२, ६
वेधो मिथोऽरिरविभेऽष्टभवे खतुर्ये ।
६,१२। ८,११। १०, ४
पंचादिमे त्रिनवके द्व्यगभे विधोस्तु
५, १ ३,९ २ ७
व्यर्कासतां सुतशिवेऽरिखगे त्रिसूर्ये ॥ ६ ॥
५, ११ ६, ९ ३,१२
पंचद्विकेऽष्टदशमेऽरिखगे भवांत्येऽ-
५, २ ८,१० ६-९ ११-१२
ष्टाद्ये त्रिके शशिसुतस्य
८, १ ४-३
गुरोर्द्विरिःफे ।
२- १२
दिङ्नंदके शरजलेऽष्टभवे त्र्यगेऽथा-
१०- ९ ५- ४ ८, ११ ३-७
"ष्टाद्ये द्व्यगेंऽकशरकेऽष्टशरेंऽकरुद्रे ॥ ७ ॥
८-१ २-७ ९-५ ८-५ ९-११
त्र्याद्ये खके भवगुणेंऽत्यरिपौ भृगोस्तु
३- १ १०-४ ११-३ १२-६
वेधो न तातसुतयोश्च स जन्मराशेः ।

---

१ सूर्यरहितपापग्रहाणां—अर्थाद् भौमशनिराहुकेतूनामित्यर्थः ।

अन्ये खगादिति स विन्ध्यहिमाद्रिमध्ये
नान्यत्र विद्धखचरः फलदोऽन्यथैव ॥ ८ ॥
क्रमवेधमुदाहरन्ति राशे–र्विपरीतं तु खगालयाच्च केचित् ।
तुहिनाचलविंध्यमध्य एवं विपरीतादशुभः शुभो व्यधात्स्यात् ।
जानाति यो न द्विविधं हि वेधं मृषाभिलाषी स जनोऽपहास्यः ।
दौष्ठ्ये ग्रहाणां न शुभं न यात्रां कुर्याच्च शान्तिं विधिनोदितेन ।

( चन्द्रवलम् )

पक्षे सिते सुतेधनांकगतः शुभो ग्लौः
विद्धो न चेज्जलषडष्टगतैर्ग्रहेन्द्रैः ।
पापांतरे खलयुतश्च खलात्कलत्रे
श्रेष्ठोऽप्यसन् हितशुभांशगतोऽप्यसत्सन् ११

( पक्षवलम् )

वलक्षपक्षादितिथौ यदि स्याच्चंद्रः शुभः श्रेष्ठतरः सपक्षः ।
कृष्णादिमे स्यान्न शुभः शुभाय चेदन्यथा तौ न शुभाय पक्षौ ।

( ग्रहाणां शुभाशुभफलम् )

रिपुखलेक्षितयुक् शुभदोऽशुभः
शुभहितेक्षितयुङ्न फलप्रदः ।
अपि च वैरिगृहेऽस्तगनीचगो
ऽनृजुगतिर्विपरीतफलप्रदः ॥ १३ ॥

( सूर्यादीनां यातव्यराशेः कतिदिनैः फलप्राप्तिः )

यातव्यराशेः फलदस्तु पूर्वं
भानुः शराहं५ कुजशुक्रसौम्याः ।
सप्ताह ७ मीज्यार्कितमांसि मासान्
२–६–३
द्विषट्त्रिसंख्यान् विधुरग्नि ३ नाडीः ॥ १४ ॥

( ग्रहाणां राश्यंतरगमने फलम् )

राशिप्रवेशे कुजतिग्मभानू मध्ये भवेतां फलदौ सितेज्यौ ।
अन्ते शनीन्दू फलदो बुधस्तु स्यात्सर्वकालं शनिवत्परौ च १५

( ग्रहाणां शान्त्यर्थं रत्नधारणम् )

माणिक्यमुक्ताफलविद्रुमाणि पार्चिः सुपुष्पोऽपि च हीरनीले ।
गोमेदवैडूर्यमिति क्रमेण दद्याच्च दध्याद्रविमुख्यतुष्ट्यै ॥१६॥
राज्ञोः प्रवालं रजतं रमण्योः गुरोः सुमुक्ता कनकं बुधस्य ।
मन्दस्य लोहं तमसोस्तु लाजावर्तश्च धार्योऽल्पधनेन तुष्ट्यै १७

( ग्रहाणां शांत्यर्थमौषधीस्नानम् )

रजनीद्वयकुष्टचंद्रलाजैः सह सिद्धार्थबलाप्रियंगुपुंखैः ।
निखिलग्रहदोषशान्तयेऽदः सवनं लोध्रयुतैर्जलैर्निरुक्तम् १८

( ग्रहाणां दक्षिणाः )

धेनुः शंखो लोहितो गौः सुवर्णं
पीतं वासो गौरघोटोऽसिता गौः ।
लोहं चाज्यो दक्षिणाः स्युर्ग्रहाणां
होमः पूजा लोकतो ज्ञेयमन्यत् ॥ १९ ॥

( शुभाशुभताराविचारस्तद्दानं च )

जन्मोडुसंपच्च विपच्चतुर्थी
क्षेमारिसंज्ञा शुभदा वधाख्या ।
मैत्रातिमैत्रा नव तारकाः स्युः
कृष्णे बलाढ्यास्तु सिते समास्ताः ॥ २० ॥

जन्मर्क्षतस्त्रिः परिवर्तनेन तारा नवत्रीषुनगा न शस्ताः ।
गुडप्रदानाल्लवणात्सहेमतिलप्रदानादिह सर्वकर्म ॥ २१ ॥

( जन्मनक्षत्रवशान्नेष्टनक्षत्राणि )

१ १० १६ १८ २३ २४

आद्यदिङ्नृपधृतित्रिविंशकं तत्त्वसंख्यमपि भं तु मंगले ।
निन्दितं जनिभतस्तु भूपतेर्देशजात्यभिषवोडु चाहितम् ॥ २२ ॥

( चंद्रपरत्वेन सूर्यचंद्रग्रहणयोः शुभाशुभत्वम् तद्दानं च )

११-३-६-१०

उपचयगतचंद्रे चंद्रभान्वोर्ग्रहश्चे-
च्छुभमगंनवंवाणेद्विस्थिते मध्यमं स्यात्
मृतिर्जलजनिरिःफेस्थायिनींदौ तु कष्टं
सतिलकनकनागं तत्र दद्यात्सवस्त्रम् ॥ २३ ॥

( चंद्रस्यावस्थाप्रमाणं, तन्नामानि, चंद्रतारावलयोर्व्यवस्था च )

सपादरुद्रा ११-१५ घटिका अवस्था
मानं तु राशौ रविसंख्यकास्ताः ।
प्रवासनष्टे च मृता जया च
हास्या च मुत्[1]क्रीडनसुप्तभुक्ताः ॥ २४ ॥

ज्वरप्रकंपस्थिरनामधेया नाम्ना समं त्वासु फलं शुभेषु ।
शुक्ले शशांको वलवाँस्तु तारा कृष्णे वलाढ्योभयवीर्यतः सत् ।

याने क्षौरे भेषजे वाग्विवादे
तारा निंद्या सिद्धिदान्यत्र चाद्यः ।
चांद्रं वीर्यं सर्वकार्ये विलोक्यं
तल्लाभे स्यात्सर्वखेटानुकूल्यम् ॥ २६ ॥

---

१ मुद्-प्रीतिः । क्रीडनं चेति च्छेदः ।

( अथावश्यके दुष्टतिथिवारादौ दानानि )

दुष्टे तिथौ तंदुलदानमाहुः शंखं विधौ वासरकेऽपि रत्नम् ।
स्वर्णं कुयोगे करणे च धान्यं नाड्यां च गां सैंधवमृक्षदौष्ट्ये ।
ग्रंथाननेकानवलोक्य सम्यक् सन्दर्भिते विट्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुमनामधेये सद्गोचराख्यं कुसुमं समाप्तम् २८

---

( त्याज्यकुसुमम् )

तिथेश्च दोषान् युतिवारदोषान् संक्रांतिगंडांतमथार्गलं च ।
क्रांत्योः समत्वं च खलस्य होरां श्राद्धं च पित्रोर्जननीप्रसूनम् ।
दिनचतुष्टयमत्र विवर्जयेदसितकामतिथेर्जनिसंभवम् ।
तिथिदिनादि निशादिनयोर्दलं प्रथमजातशिशोरपि शुक्रकम्[1] ।
ऊनाधिमासौ ग्रहभं सितेज्यजन्मेशमौढ्यादि जनुःक्षयोत्थम् ।
ग्रहोद्भवं सूतकमंगचंद्रपापोद्भवां संत्यज कर्तरीं च ॥ ३ ॥
भद्रां च लत्तां खलवर्गमिंदोः खेटैक्यमृक्षस्य च खेटवेधम् ।
पापैष्ययुक्तोज्झितभं तथैव विषाख्यनाडीरपि रिःफचंद्रम् ४
लग्नात्कुजं नैधनगं च षष्ठं भृगुं शशांकांगनवांशपं च ।
दोषं विलग्नद्युनयोर्विलग्नाच्चंद्रान्मृतीशं तनुगं खलांशम् ॥५॥
जन्मांगभाभ्यां मृतिभं खलेंदु-युक्लग्नमन्यानपिदोषसंघान् ।
जहीहि तत्तत्कुसुमप्रणीतानाम्रेडितं यत्स्मृतयेऽल्पबुद्धेः ॥६॥
ग्रंथाननेकानवलोक्य सम्यक् सन्दर्भिते विट्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुमनामधेये त्याज्याभिधानं कुसुमं समाप्तम् ॥७॥

---

१ ज्येष्ठमासम् ।

( संस्कारकुसुमम् )

( प्रथमार्तवम् )

वैशाखमार्गाश्विनमाघशुक्रे नभस्तपस्ये प्रथमार्तवं सत् ।
रिक्ताष्टदर्शोनषडाद्यहीने तिथौ सिते ज्ञेज्यसितेंदुवारे ॥ १ ॥

मिश्रोग्रतीक्ष्णोज्झितभे प्रशस्तं
दिवा च पौष्णेऽदितिभे च मध्यम् ।
निंद्यं कुयोगे परमंदिरे च
निंद्ये स्थले संक्रमणे कुलग्ने ॥ २ ॥

संध्यायां ग्रहणे श्राद्धे वस्त्रे श्वेते नवेतरे ।
गदे रक्तेऽल्पबहुले निद्राभद्रासु नो शुभम् ॥ ३ ॥

गुणप्रभूतं यदि चाल्पदोषं सुखाय च स्यात्प्रथमार्तवं हि ।
चेदन्यथा शान्तिकतः सुखाय द्व्याचार्ययुक्तेक्षितलग्न इष्टम् ४

( रजस्वलास्नानम् )

ध्रुवाश्विहस्तानिलमैत्रयुग्मे मृगे धनिष्ठासु तिथौ शुभेऽह्नि ।
स्नायादुदक्याश्विनमैत्रवायु-धात्रर्कचांद्रैर्लभते हि गर्भम् ५

( गर्भाधानम् )

पंचांगशुद्धदिवसे मृगमैत्रहस्त-
स्वातीध्रुवेषु हरिभात्रितये शुभाह्नि ।
लग्नाच्च केंद्रनवधीगतसद्ग्रहेंद्रैः
पापैर्भवारिसहजेषु ११-६-३ समक्षपायाम् ॥ ६ ॥

विधौ पुमंशर्क्षगते बलेऽथ लग्नोनयुग्मेतरगे शनौ च ।
याहि स्वपत्नीं सुतकामरिक्तां षष्ठीं च पर्वाणि पितृक्षयाहम् ७

१ द्व्याचार्यौ—गुरुशुक्रौ, ताभ्यां युक्तेक्षिते लग्ने ।

पौष्णांतके मूलमघोरगाणि संध्यां दिनं रात्रिचतुष्कमाद्यम् ।
गंडांतमुत्पातदिनं जनुर्भं वैधाभिधं भं तनुतोऽथ राशेः ॥८॥
त्यजाष्टमं यत्खलयुक् तथोडु चित्रादितीज्याश्विनभं च मध्यम्
पुत्रीप्रियो यात्वसमक्षपायामृतेर्दिनात् षोडशवासरेषु ॥ ९ ॥

( सीमन्तकर्म पुंसवनं )

तिथावरिक्ते गतपर्वषष्ठ—सूर्ये नृवारे नैरतारकाभिः ।
मैर्मिश्रतीक्ष्णोग्रविवर्जितैर्वा सीमन्तउक्तोऽष्टमषष्ठमासे १०
केन्द्रत्रिकोणत्रिधनेषु सद्भिः पापैस्त्रिषष्ठायगतैर्ग्रहेन्द्रैः ।
द्वन्द्वोनपुंलग्ननवांशकेषु व्ययांगपुत्रे १२-१-५ खलखेटहीने ।
अंत्यत्रिभागोनसितेतरेऽपि पक्षे सिते मासपतौ वलिष्ठे ।
द्वित्रिप्रमे मास्यथ पुंसवः स्यात् सीमन्तरीत्या सह वाथ तेन ।

( मतान्तरे नक्षत्राणि )

पुष्यः करो मूलमपि श्रुतिश्च पुनर्वसुश्चापि मृगो नृतारा: ।
अथाश्विनी वाजपदं च मैत्रं वसिष्ठमुख्यैरिदमप्यवादि १३

( माधवपूजनम् )

तारेंदुवीर्ये नरगर्भवत्योरथाष्टमे माधवपूजनं च ।
विरिंचिगोविंदसुरेज्यभैः सच्छुभाह्नि लग्नेऽष्टमशुद्धिभाजि ।

---

१ जातकचन्द्रिकायां तृतीयप्रबोधे श्लो. १४३–१४४.
आद्यं जनुर्भं, दशमं च कर्म, सांघातिकं षोडश–मृक्षमाद्यात् ।
अष्टादशं तत्समुदायसंज्ञं, विनाशभं स्याच्त्रिकारोन्मितं च ।
तत्त्वोन्मितं मानसनामधेयमुक्तानि षड्भानि च जन्मकाले ।
स्मृतिः कलिर्हानिररिष्टमुक्तं क्लेशो व्यथा षड्भफलं क्रमेण । इति ।
२ रविभौमगुरुदिने । ३ पुन्नक्षत्रैः । ४ द्वंद्वोनं–मिथुनहीनम् ।

( मासपतयस्तद्बलेन शुभाशुभम् )

मासाधिनाथा भृगुभौमपूज्य–सूर्येन्दुमन्दज्ञतनूपचंद्राः ।
सूर्योऽप्यमीषां बलतस्तु पुष्टिं गर्भस्य दुःखं विबलेष्वसीषु १५

( प्रथमगर्भे सीमन्तसंस्काराभावे द्वितीयगर्भे
वा नामकरणदिवसे कर्तव्यम् )

सीमंतसंस्कारविवर्जिता चेत् कान्ता प्रसूयेत परत्र गर्भे ।
कार्यः स वा तं शिशुमंकसंस्थं विधाय नामाह्नि विधेय एषः १६

( जातकर्म )

कुर्याज्जातककर्म जन्मनि शिशो रात्रावथो सूतके
स्नात्वा शीतजलेन वस्त्रसहितं नद्यादिपूदङ्मुखः ।
प्राङ् नाडीछिदितो न चेत्कृतमिदं तत्सूतकांते भवेन्
मैत्रक्षिप्रचरध्रुवैः शुभदिने पर्वाख्यरिक्तोनिते ॥१७॥

( अथ स्तन्यपानम् )

रिक्तां भौमं वैधृतिं पातविष्टी त्यक्त्वा भेषु क्षिप्रमैत्रध्रुवेषु ।
स्तन्यं श्रेष्ठं पंचमासात्परं हि दंतोत्पत्तेः श्रेयसे नैव पूर्वम् १८

( सूतिकास्नानम् )

षष्ठ्यष्टरिक्तार्रविमूलमिश्र–श्रवोमघार्द्रात्रययाम्यचित्राः ।
हित्वा ज्ञमंदौ ध्रुवपूषवाता–र्काश्वींदुमित्रेऽभिषवश्च सूत्याः १९

( नामकर्म )

कार्यं नाम द्वादशैकादशेऽह्नि मासांते वाष्टादशाहेऽपि पित्रा।

---

१ जनन्याः स्तन्यपानविषयमिति न भ्रमितव्यम् । किन्तु ।
गवादिदुग्धपानविषयमिति प्रतिभाति अन्यथा बालस्य
जीवनमपि न संभवेत्तावत्कालम् अग्रे च श्लो. २५ के
पुनर्दुग्धपानमुहूर्तमुक्तमतोऽयं प्रक्षिप्तइव प्रतिभाति, ।

२ रविशब्देन द्वादशी ज्ञेयेति ।

भूपाङ्कूपे विंशतौ मासि कार्यं कालातीते जातकोक्तर्क्षवारे २०
दिष्टादिष्टो यदातीतस्तदा जनकपुत्रयोः ।
विलोक्यं चंद्रतारादि वलं शुभदिने तथा ॥ २१ ॥
नो कार्यं तद्भूमिजे रिक्तमंदे मध्याह्नोर्ध्वं दुर्युतौ चंचलांगे ।
किंस्तुघ्ने वा लग्नतश्चाष्टमस्थे रिःफस्थे वा खेचरे न त्रिवर्णम्[1] ।

(दोलारोहणम्)

मृदुलघुध्रुवभे शुभवासरे
जनित आकृति २२ सूर्य १२ नृपो १६ न्मिते ।
अहनि वालकपालकरोहणं
रविभतः प्रकृतेः २१ शुभमर्क १२ भे ॥ २३ ॥

(जलपूजनम्)

चैत्रे पौषे वाधिके शुक्रगुर्वोर्मौढ्ये सूती पूजयेन्नैव नीरम् ।
मैत्रार्केज्यादित्यचांद्रश्रवोभे सूर्ये तत्सत्सद्दिने मासमध्ये २४

(दुग्धपानं निष्क्रमणं च)

एकत्रिंशद्वासरे वा द्वितीये
जन्मर्क्षे स्याद् दुग्धपानं शिशूनाम् ।
शंखेनाथो निष्क्रमः स्याच्चतुर्थे
मासे यात्रोक्तेऽह्नि वा द्वादशेऽह्नि ॥ २५ ॥

(भूम्युपवेशनम्)

कुजे विशुद्धे लघुसौम्यमित्र–ध्रुवेंद्रभे रिक्तविहीनतिथ्याम् ।
धात्रीं वराहं परिपूज्य भूमौ निवेशयेत्पंचममासि वालम् २६

(कर्णवेधः)

वेध्ये फाल्गुनपौषकार्तिकमधुष्वाद्ये दले सद्दिने
रिक्तापर्वदिनोनितेऽपि च तिथावोजाब्दके नृस्त्रियोः ।

---

१ त्रिवर्णं–त्र्यक्षरम् ।

दक्षान्त्ये लघुमैत्रविष्णुयुगलादित्युत्तरे सद्ग्रहां-
गांशे चापि दिवाश्रुती जनुरुडुं मासं च हित्वाऽवसम् २७

दशषड्वसुसप्तमाद्यमासे
जनितो वा रविभूप१२-१६सम्मितेऽह्नि ।
निधने विमलेऽष्टषड्व्ययोनैः
शुभखेटैरितरैस्त्रिलाभषट्स्थैः ॥ २८ ॥

( अथ तांबूलभक्षणम् )

सार्धद्वये मासि हरीन्द्रहस्त-पौष्णादितिद्वंद्वकइन्दुभे च ।
भौमार्किवारौ प्रविहाय शस्तस्तांबूलभक्षः सह वाऽशनेन २९

( अथान्नप्राशनम् )

षष्ठे मासे वाष्टमे दारकाणामेकन्यूने कन्यकानां नवान्नम् ।
नंदारिक्तार्काष्टमीहीनतिथ्यां शुक्रज्ञेज्यानां दिने लग्नकेंऽशे ।
मृदुध्रुवक्षिप्रचराभिधाने त्र्यंशोनकृष्णेन्दुदिनांशलग्ने ।
अजालिमीनोनितलग्नकेऽपि केंद्रत्रिकोणत्रिधनायसद्भिः ३१
पापैस्त्रिषष्ठायगतैः खशुद्धौ व्ययाष्टषष्ठो न शशी प्रशस्तः ।
शुक्लासिताष्टांतरतः शुभः स्यात् कृष्णार्जुनाष्टांतरसच्छशांकः।

( केंद्रादिस्थितग्रहपरत्वेनान्नप्राशनफलम् )

कुष्टी यज्वा पित्तवान् ज्ञानवाँश्च
दीर्घायुः स्याद् भोग्यभाक् यातरोगी ।
१-४-७-१०-५-९-८-१२
केंद्रे कोणेऽष्टव्यये भास्कराद्यैः
क्षीणे चंद्रे भैक्षभुक् बालकः स्यात् ॥ ३३ ॥

---

१ "नक्षत्रमृक्षं भंतारातारकाप्युडु वा स्त्रियां" इत्यमरः। २ "वल-क्षोधवलोऽर्जुनः" इत्युक्तेरत्रशुक्लपक्षः ।

( अथाब्दपूर्तिः )

मार्कंडेयादीन् गुडाद्यैः प्रपूज्य षष्ठीं देवीं चापि सिद्धार्थदूर्वाः ।
हस्ते बध्नीयात्तदा भौमशन्यो–र्वारो नो भं चेत्तदाब्देऽस्य विघ्नाः

( गर्भाधानाद्यन्नप्राशनांतेषु कालरोधादवर्ज्यानाह )

न्यूनाधिमासौ हरिवाक्पतिं च याम्यायनं भार्गवपूज्ययोश्च ।
बाल्यास्तवार्ध्यानि च कालरोधा–न्न वर्जयेद् गर्भमुखाशनान्ते

( बाल्यत्ववार्धक्यदिनानि, मतांतरं च )

पश्चात्पुरस्तादुदितस्य बाल्यं भृगोर्दशाहं त्रिदिनं क्रमेण ।
पंचाथ पक्षं च जरत्वमुक्त–मीज्यस्य ते पक्षमुदाहरंति ३६
केचिद्दशाहं द्वयमाहुरन्ये सप्ताहमन्ये त्रिदिनं द्वयोस्तत् ।

( चंद्रस्य विशेषः )

चंद्रस्य बाल्यास्तजरत्वमर्ध–द्वित्रिप्रमं नेष्टमवाल्यमन्ये ॥३७॥

( अत्रान्यो विशेषः केतूदयेऽस्तविशेषश्च )

एतानि चूडाव्रतदेवनीरा–शयप्रतिष्ठाकरपीडनादौ ।
उत्पातकेतूदयतो दिनानि सप्त त्यजेत्षोडश केतुतो वा ३८
अस्तोत्तरं सप्त—

( सिंहस्थगुरोः सपरिहारो लग्नादौ निषेधः )

च सिंहगोऽपि
गुरुश्च भाग्यादिमपादयातः ।
वर्ज्योऽन्तरे गौतमिदेवनद्यो–
वैशाखमासेतरमासगोऽपि ॥ ३९ ॥

( गुरुसूर्ययोर्योगे नीचराशिस्थगुरौ निषेधः सपरिहारः )

गुरुदिवाकरयोर्युजि मंगलं न शुभकृद्धिषणेऽपि च नीचगे ।
मगधकौंकणनिर्वृतिगौडके परमनीचलवात्स बहिः शुभः ४०

( गुरोर्वक्रातिचारे त्रयोदशदिनपक्षे विवाहादिनिषेधः )

वक्रेऽतिचारे न गुरौ शुभं स्या–
न्मनुद्वया २८ हात्परतः शुभाय ।
पक्षे तथा विश्व १३ दिनोन्मितेऽपि
विवाहयात्रादि न मंगलाय ॥ ४१ ॥

( अथ चूडाकरणम् )

चूडा कार्या द्वित्रिपंचादिमेऽब्दे
नोचेन्माता पंचमासोर्ध्वगर्भा ।
साकं मौंज्या पंचमासात्परं च
कार्या माघात्पंच मासे विचैत्रे ॥ ४२ ॥

( मातरि रजस्वलायां सूतिकायां वा चूडाव्रतयोर्निषेधः )

व्रतं च चूडा करपीडनं नो रजस्वला वाऽप्यथ सूतिका च ।
अंबा विशुद्धौ विदधीत चेन्नो लग्नांतरं शांतिकतोऽपि कार्यम् ।

( चौले तिथिनक्षत्रादि )

रिक्ताद्यषष्ठी रविपर्वहीने ४।९।१४।१।६।१२,१५।३०।
तिथौ ज्ञशुक्रेंदुगुरूदयेऽह्नि ।
करत्रये चापि हरित्रये च
शाक्रेंदुभे पौष्णयुगेऽदितीज्ये ॥ ४४ ॥

पापास्त्रिषष्ठायगताः शुभास्तु केन्द्रत्रिकोणत्रिधनांत्य इष्टाः ।
द्यूने न शुक्रो निधने शुभः स चंद्रो न चांत्ये जनिभं च मध्यम् ।

( क्षौरकर्मणि विशेषः )

चौलप्रोक्तैर्वारभाद्यैः शुभं स्यात् क्षौरं गंगायागपाणिग्रहादौ ।
पित्रोर्नाशे विप्रराजाज्ञया वा नित्यंकुर्याद्भूपतिः पंचमेऽह्नि ।

क्षौरर्क्षे वास्योदये निंद्यतारा हित्वा ज्ञेयं पित्र्यमित्रोत्तराश्च ।
ग्राह्यं क्षौरात्क्षौरमिष्टं न नंदे ९ वारे तारेंद्वोर्बले तच्छुभं स्यात्
प्रातः संध्यासु सायं च रात्रौ वापि रणोन्मुखे ।
नरि क्षौरं न शंसंति तथोत्कटविभूषिते ॥ ४८ ॥
भुक्ताभ्यक्तस्नातयात्रोन्मुखांत–
र्वलीनाथानाशनप्राग्वयस्काः ।
स स्वामिस्त्री राजसेवी च योगी
क्षौरं कुर्युर्नो तदावश्यके सत् ॥ ४९ ॥

( अथाक्षरारंभः )

वर्णारंभोऽथोत्तरे चायने सन् कुंभेनोने पंचमाब्दे गणेशम्
वाचं विष्णुं पूजयित्वा श्रियं च हस्तत्र्यंत्यादित्यपुष्णाश्विमैत्र्ये
विष्णौ शंभौ पापशीघ्रोनलग्ने सद्वारे स्यात्सत्तिथौ मृत्युशुद्धौ ।
बुद्धिस्थाने सद्ग्रहेणेक्षिते वा युक्ते चास्मिन् स्वामिना सद्बलेन

( अथ विद्यारंभः )

पित्र्याग्निशक्रद्विसुरांतकोनै–र्भैर्भानुविद्वाक्पतिशुक्रवारे ।
द्वित्रीषुषट्दिक्त्रितये तिथौ स्या–दधीतिरंत्यध्रुवभैर्न केचित्

( अथ मौञ्जीवन्धः )

गर्भाधानाज्जन्मतो वाष्टमेऽब्दे विप्रादीनामीशसंख्येऽर्कवर्षे ।
मौञ्जी शस्ता पंचषष्ठाष्टवर्षे काम्या गौणा मुख्यकाले द्विनिघ्ने ।

( गुरुवलम् )

चेदुक्तकाले न गुरोर्बलं स्या–च्छांत्यापि जीवः शुभतामुपैति ।
अनुक्तवर्षे च गुरुर्बलीयान् व्रतं न शाखाधिपतौ विवीर्ये ५४
मुख्ये काले चेन्न जीवः शुभः स्या–
च्चैत्रे मीने सद्व्रतं स्यान्नृनार्योः ।

राशेः पंचद्व्यंकसप्तायसंस्थः
श्रेष्ठो नाष्टांबुव्ययेऽन्यत्र मध्यः ॥ ५५ ॥
मध्ये पूजा निन्दिते सा द्विनिघ्ना
कालेऽतीते स्वे गृहे स्वोच्चके सः ।
स्वांशे वर्गश्रेष्ठके वा स्वमैत्रे
श्रेष्ठो नीचारिस्थ इष्टोऽप्यनिष्टः ॥ ५६ ॥

( मास-तिथि-वार-शुद्धिः )

माघादिपंचस्वसितत्रिभागे पूर्वे शुभं श्वेतदले व्रतं स्यात् ।
द्वित्रीषुषट् दिग्रविरुद्रसंख्ये तिथावभौमार्कतनूजवारे ५७

( वेदपरत्वेन नक्षत्रशुद्धिः )

पूर्वाहस्तत्रयमृगशिवे मूलसाप्ये ऋचां स्या-
न्मित्रादित्यध्रुवमृगकरांत्येज्यभे याजुषाणाम् ।
साम्नां विष्णुद्वयशिवकराश्व्युत्तरे ज्येषु मौंजी
शेषाणां स्याद्वसुलघुमृगांत्येऽदितौ मित्रसंज्ञे ५८

( सर्वसामान्यनक्षत्राणि )

पित्र्याग्निशक्रद्विसुरांतकोने-ष्वर्क्षेषु नो वारुणमिष्टमन्ये ।

( लग्नशुद्धिः )

न चापराह्ले त्रिषडाययाताः खलाः शुभाः षड्व्ययमृत्युहीनाः।
निंद्याः कवीज्येंदुविलग्ननाथाः षडष्टगाः शुक्रविधू व्यये च ।
पापाश्च लग्नाष्टमधीषु कर्क-वृषेंदुमंगे रविमिष्टमन्ये ॥६०॥
श्रेष्ठा विशेषान्निजमंदिरोच्च-केंद्रत्रिकोणे श्रुतिपश्च तद्वत् ।
शाखेशवीर्यांगकवासराणि शस्तानि भानोश्च बले व्रतं सत् ।
शाखेश्वरे वा भृगुजे गुरौ वा नीचे जिते शत्रुगृहेऽस्तगे वा ।
व्रती व्रती नांशपतौ तथैव बुधत्रयांशे तनुगे तु यज्वा ॥६२॥

तनुत्रिकोणोपगते गुरौ वा सिते शुभांशे शशिनीह विद्वान् ।
व्रती भवेज्जीवसितेंदवश्च-पापान्विताः क्रूरतरो गुणः स्यात् ।
आदित्यकर्णांतिमपादहीने स्वांशेऽतिदुःखी सति शीतभानौ ।

( जन्ममासादिनिषेधः )

जन्मर्क्षमासादि शुभं द्विजाना-माद्ये न गर्भे नृपतेः परस्मिन् ।

( व्रतबंधे वर्ज्यानि )

कृष्णे प्रदोषे निशि चापराह्ने
गलग्रहे मंददिनेऽनधीतौ ।
प्रातश्च गर्जेऽपि न मौंजिकर्म
शुभं वसंते

( प्रदोषतिथयः )

३-६-१२
त्रिषडर्कसंख्याः ॥ ६५ ॥
यामाच्च सार्धात्प्रहरद्वयाच्चे—
दर्वाक् निशायां तिथयः प्रदोषाः ।

( गलग्रहतिथयः )

१३
कामाच्चतस्रो रवित७स्त्रयं च
चतुर्थिकाष्टैव गलग्रहाः स्युः ॥ ६६ ॥

( अथानध्यायतिथयः )

ज्येष्ठे शुचौ पौषयुगे द्वितीया दिग्रुद्रभानुप्रमशुक्लतिथ्यः ।
क्रमादनध्यायदिनानि नात्र मौंजीनिबंधः शुभदो निरुक्तः ६७

( अथ समावर्तनकेशांते )

मौंजीविमोक्षो व्रतवन्नृपाब्दे १६
केशांतकर्मापि च चौलवत्स्यात् ।

गुरोर्बलं नात्र–

( छुरिकाबंधनम् )

नृपांत्यजाते–

श्छूरीनिबंधः करपीडनात्प्राक् ॥ ६८ ॥

चैत्रोनमौंजिमासादौ विकुजे वासरेऽपि च ।

उदिते तु कुजे कव्यां छूरीबंधः शुभाप्तये ॥ ६९ ॥

ग्रंथाननेकानवलोक्य सम्यक् संदर्भिते विट्ठलदीक्षितेन ।

मुहूर्तकल्पद्रुमनामधेये संस्कारसंज्ञं कुसुमं समाप्तम् ॥ ७० ॥

---

( विवाहकुसुमम् )

( प्रयोजनम् )

कान्ताधीनाः कामभोगार्थधर्माः

सा चेच्छीलेनान्विता स्युस्तदा ते ।

तच्छीलं सल्लग्नतः प्राप्यतेऽतो

लग्नं सम्यक् शास्त्रदृष्ट्याभिधास्ये ॥ १ ॥

( लग्नपृच्छा )

कर्ता भक्त्या वित्तताम्बूलदानैः

सम्यक् दैवज्ञं प्रपूज्य प्रपृच्छेत् ।

आदौ कान्ताकान्तयोः संनिवेद्य

नक्षत्रे वां नामनी संप्रहृष्टः ॥ २ ॥

पृच्छा लग्नं गोतुलाकर्कसंज्ञं तत्रस्थौ वा चन्द्रदैत्येन्द्रपूज्यौ ।

ताभ्यां दृष्टं युग्मराश्यंशगाभ्यां कन्यालाभो जायतेमानवस्य ।

लग्नाच्चन्द्रः पंचकर्मायसप्तदुश्चिक्यस्थो जीवसंदृष्टदेहः ।

कन्यालाभायाल्मस्तंगतो वा नीचस्थश्चेन्नो तदा कन्यकाप्तिः

समेतरांशदृक्कगं समेतरद्विलग्नकं ।
नरग्रहैर्युतेक्षितं कुमारिकावरप्रदम् ॥ ५ ॥
लग्ने शशांकोऽस्तगृहे कुजोऽथो
लग्नाच्छशी मृत्यरि ८।६ गो वलीयान् ।
लग्ने खलः सप्तमगोऽवनीजो
योगत्रये स्त्री विधवात्वमेति ॥ ६ ॥
पापो विलग्नाद्यदि पंचमे स्यान्नीचेऽरिदृष्टो मृतवालका स्त्री
कृष्णे समर्क्षेन्दुरसत्प्रदृष्टः षडष्टगो भंगकरो विवाहे ॥ ७ ॥

( शुभाशुभशकुनम् )

सुवासिनी मंगलवाद्यघोषः पुण्यं च वाक्यं शुभवस्तुवार्ता ।
तदाभवेच्चेद्भविता विवाहः काकादिदुष्टे न शुभं प्रदृष्टे ॥८॥

( अथ वधूवरयोर्मेलापकविचारः )

वर्णश्च वश्यं च मिथोऽपि तारा योनिश्च मैत्री खगयोर्गणश्च ।
भकूटकं चापि तथैव नाडी यथोत्तरं स्युर्गुणदा वलाढ्याः ९

( वर्णविचारः )

विप्रादयः स्युर्झषतो न कन्या
वराधिका,

( वश्यविचारः )

नुर्जलजाश्च भक्ष्याः ।
विहाय सिंहं सकला विधेया
ऋतेऽलिमन्ये मृगपस्य वश्याः ॥ १० ॥
अलेर्न मित्रं हरिरब्जासिंहा
नरस्य नेष्टा अवलोकतोऽन्यत् ।

( ताराविचारः )

अन्योन्यभांते गणिते नृनार्योः
ऋक्षेऽङ्कतष्टे त्रिनगेषु ३।७।५ नो सत् ॥ ११ ॥

( नक्षत्राणां योनिः )

हयगजाजफणिद्वयकुक्कुरौ त्वजबिडालवृकोंदुरधेनवः ।
महिष[1]गोरिह[2]यारिपशुद्विषद् द्विमृगकुक्कुटवानरबभ्रवः ॥१२॥
बभ्रुवानरमृ[3]गारिहयाः स्युर्योनयोहरिपशुद्विरदाश्च ।

( योनिवैरम् )

श्वैणमोतुखनकं गजसिंहं बभ्रुसर्पमजवानरमुग्रम् ॥ १३ ॥
वैरं च गोद्वीपि च कालिघोटमन्यच्च लोकादपि संविदित्वा ।
वर्ज्यं प्रयत्नान्नृपभृत्ययोश्च स्त्रीकान्तयोः श्रेष्ठफलेषु नेदम् १४

( निसर्गमैत्री )

सूर्याज्जीवकुजेंदवो रविबुधौ सूर्येज्यचंद्राः सितो-
ष्णांशू भौमरवींदवः शनिबुधौ मित्राणि शुक्रेंदुजौ ।
शुक्रार्कौ न बुधो विधुः सितबुधौ चंद्रोष्णगू वैरिणः
सूर्येन्दुक्षितिजाः समोऽन्य उभयस्मिन् पार्श्वे इष्टास्त्रिगाः १५

( गणमैत्रीविचारः )

ब्राह्मांतकार्द्रात्रि[4]र्युगी नरे स्यान्मूलाहिवस्वंबुपमित्रचित्राः ।
मघेंद्रभे दैत्यगणेऽथ दैवेऽदितींद्वनुक्षिप्रमरुच्छ्रवोऽन्त्यम् १६
निजनिजे भवतीह रतिर्गणे ह्यमरमानवयोः खलु मध्यमा ।
दनुजदेवयुतौ कलिरासुरेऽपि च नरे निधनं मुनयोऽवदन् १७

१ गोरिः=व्याघ्रः । २ हयारिः महिषः । ३ मृगारिः सिंहः ।
४ त्रियुगीत्यनेन तिसृणां पूर्वोत्तराणां ग्रहणम् ।

रक्षोगणो ना नृगणा कुमारी योन्यादियोगेन शुभो विवाहः।
स्त्रीभान्नरश्चेन्निकटे नृदूरं दुष्टं तु मैत्र्याग्रहतारयोः सत् १८

( षडष्टकादिविचारः )

निधनता निर्धनारिभयोः स्मृता विवसुता च वसुव्ययके परा।
विसुतता सुतंतापसयोर्भवेदपि परेषु परा धनसंततिः ॥१९॥
राशीशमैत्रं त्वथ चैकपत्यं नाड्यर्क्षशुद्धिर्यदि सद्विवाहः।
दुष्टे भकूटेऽपि च राशिपांशप्रभुप्रियत्वं न गणस्य दोषः २०
चेद्राशिनाथप्रियता नहि स्यादंशेशमैत्र्याऽपि शुभो विवाहः।
दुष्टे भकूटेऽपि च नाडितारावशित्वसत्त्वे जगदे मुनीन्द्रैः २१

ग्रहमैत्र्यास्तु सद्भावे दुष्टकूटं विनश्यति।
ग्रहवैरं सद्धकूटे नश्यतीत्येव निश्चयः॥ २२ ॥

ऋक्षं भिन्नं राशिरेको यदि स्याद्राशिद्वन्द्वं चैकमृक्षं यदापि।
नक्षत्रैक्ये पादभेदो यदि स्यान्नाडीदोषो नो गणस्यापि दोषः।

( आवश्यके नाडीवेधादौ दानानि )

नाडीवेधे हेम गां चापि दत्वा-
ऽऽवश्ये कार्यो नेति केचिद्विवाहः।
द्व्यर्के ताम्रं पंचनदे च रौप्यं
गोयुग्मं षट्नैधने दानमाहुः॥ २४ ॥

( नाडीवेधविचारः )

दास्रं शक्रजलाधिपार्यमशिवद्वंद्वं तथेंद्वन्तके-
ज्याहिर्बुध्न्यभगानुतक्षवसुभं नीरस्य भं नाडिका।
मध्याथाग्न्यहिवायुविश्वयुगलं चान्त्यं परा नाडिका
दंपत्योर्न शुभाय पूर्वचरमे मध्या भवेन्मृत्युदा ॥२५॥

अपि त्रियुग्मांघ्रिमजांगनाऽथो वह्न्यर्क्षचांद्राच्च युगेषु नाड्यौ
वश्यादिना त्र्यस्त्रपयोर्नृनार्योरुद्वाह एतद्युगलं न केचित् २

( वधूवरयोर्जन्मनक्षत्राज्ञानादौ विशेषः )

अविदितं रमणीवरयोर्भवेद् भमभिधागृहतस्तु भमेलकः ।
विदितमेकतरस्य भमेतयोर्गुरुबलादि ततोऽभिधया युतिः २

( एकस्य पुंसो नामबहुत्वे निर्णयः )

नामानि स्युर्यस्य पुंसो बहूनि तस्य ग्राह्यं चांतिमं नाम कार्ये
चेत्संयुक्तं नामजाद्यक्षरं स्यादाद्याद्वर्णाद्राशिनक्षत्रचिन्ता २

( नामराशि-जन्मराश्योः कार्यपरत्वे व्यवस्था )

देशे ज्वरे ग्रामगृहप्रवेशे सेवासु युद्धे व्यवहारकार्ये ।
द्यूते च दानादिषु नामराशिर्यात्राविवाहादिषु जन्मराशिः २

( अथ वधूवरयोर्घटितगुणविचारः )

साम्ये च वर्णोत्तमजे वरे भूर्गुणोऽथ वश्याशनके गुणार्धम् ।
एकोऽरिवश्ये द्वितयं सखित्वे स्याद्वैरिभक्ष्ये गुणहानिरेव ३

तारांशुभत्वे वरकन्ययोस्तु
त्रयस्तदर्धं सदसद्भसत्त्वे ।
महारिवैरे सममित्रतायां
खेंदुत्रिकाम्बु०।१।३।४ प्रमिता गुणाः स्युः ॥३१॥

वैरेऽरिसाम्येऽरिसुहृत्वकेऽपि द्वयोश्च साम्ये सममित्रतायाम् ।
एकाधिपत्योभयमित्रतायां खैकद्विवह्न्यम्बुशरा गुणाः स्युः ३२
साम्ये च षट् ना मनुजश्च दैवी पत्नी शराः स्युर्विपरीतके षट् ।

१ चतुर्नाडी-पंचनाडीविषये तदवलोकनप्रकारो देशभेदेन व्यवस्था च विवाहप्रकरणे मु० चि० पीयूषधारायां विशदीकृतोऽतस्तत एवावगन्तव्यः ।

दैव्यंगना राक्षसनात्र चैको गुणोऽन्यथाद्वावथ दुष्टकूटे ३३
चेद् योनिमैत्री रमणीसुदूरं वेदा न चेत्खं त्वनयोर्यदैकम् ।
भूर्ऋक्षपादैक अभाव इष्टे चेत्कूटके भानि नृदूरके षट् ॥३४॥
भिन्नर्क्षराश्येक इषून्मिताः स्यु-
स्त्वन्यत्र सप्ताथ च नाडिभेदे ।
गजा गुणैक्यं धृतितोऽधिकं चेत्
स्त्रीकान्तयोः सौख्यकरं प्रदिष्टम् ॥ ३५ ॥

( अथ कुमारीवरणम् )

विवाहभैर्विष्णुभवासवे च पूर्वात्रये कृत्तिकया समेते ।
आकल्पपुष्पाक्षतचारुवस्त्रफलैः कुमारीं वरयेत्सुलग्ने ॥ ३६ ॥

( अथ वरवरणम् )

पूर्वात्रयेऽग्निध्रुवभे द्विजो वा कन्यासहोत्थो[2] वसनोपवीतैः ।
शुभेऽह्नि वाद्यादिभिरादृतः सन् वरस्य कुर्याद्वरणं शुभेच्छुः ॥

( विवाहे वर्षशुद्धिः )

गर्भाज्जनेर्वाष्टमतस्त्रिवर्षे केचिच्च वाणाद्दशमावधीति ।
तत्रापि युग्मे करपीडनं सत् तद् द्वादशे केऽपि नुरोजवर्षे ३८

( गुरु-सूर्य-चंद्रवलविचारः )

गुरोर्विशुद्धौ खलु कन्यकायाः पाणिग्रहः सूर्यवले वरस्य ।
चान्द्रे वले सत्यनयोस्तु गौडाः सूर्ये तथार्ये वलवत्यवाक्स्थाः

( विवाहे मासशुद्धिः )

विचैत्रमाघादिकपंचमासे मार्गे युगेऽर्के भगवच्छयान्तम् ।
पाणिग्रहोऽजालिमृगस्थसूर्ये चैत्रोर्जपौषेष्वपि कन्यकानाम् ४०

---

१ "अन्यथा खं त्वथदुष्टकूटे" इ. पाठः. २ कन्यासहोत्थः=कन्याभ्राता ।

( अथ नानाविधाः शास्त्रार्थाः )

पुंसो विवाहात्करपीडनं नो स्त्रिया दलेऽब्दस्य न मंडनाच्च
स्यान्मुंडनं नापि कुले शुभानां त्रयं महत्तो लघु मंगलं नो ४१
समक्रिया नापि च सोदराणां युग्मेतराणां न वधूप्रवेशात्
गमस्तु पुत्र्याः सति चाब्दभेदे महानदीशैलकृतेऽन्तरे सत् ४२

( प्रथमगर्भयोः सुतकन्ययोर्जन्ममासादिनिषेधः )

प्रथमगर्भजयोः सुतकन्ययो–र्जनितिथिक्षणमासभवासरे ।
परिणयो न शुभाय भवेदना–दिमभुवोस्तु तयोर्हितकृच्च सः ॥

त्रिंशद्दिनानि जनुषश्च स जन्ममासो
निंद्यो भवेत्सकल एषु शुभेषु केचित् ।
त्यक्त्वा दिनानि दश शेषदिनानि शस्ता-
न्यन्ये तु चांद्रमखिलं परिवर्जनीयम् ॥ ४४ ॥

( जन्ममासादिग्रहणे व्यवस्था )

चेज्जन्ममासो विपरीतपक्षे वारो भवेच्चेद्दिनरात्रिभेदे ।
चेज्जन्मभं स्याच्च तदर्धभेदे सन्मंगलं प्राच्यजना वदन्ति ४५

( ज्येष्ठमासे विवाहादिनिषेधः )

ज्येष्ठे मासे ज्येष्ठयोर्नैव कार्यः स्यादुद्वाहः कन्यकापुत्रयोश्च ।
एकं ज्येष्ठं चेत्तयोः स्याद्विवाहः केचित्सूर्ये दोष एषोऽनलस्थे ॥

( पुनर्नानाविधाः शास्त्रार्थाः )

नैकस्य कन्याद्वितयं सहोत्थं देयं तथा सोदरयोश्च पुंसोः ।
शुभे न कार्यं पितृकर्म गेहे द्विमंगलं सन्न विनाब्दभेदात् ४७
वरस्य वध्वाश्च कुले तु कश्चित् म्रियेत वाग्दानविधेः परं चेत् ।
नोद्वाह इष्टः स च शांतिकेन वैनायकेनात्र परं तु मासात् ।

भ्रातानुजो न स्वविवाहमाद्ये-ऽनूढे सति भ्रातरि सोदरे च।
कुर्यान्न पुंस्त्वे पतिते न दोषः संन्यस्तदूरे विकलेंद्रिये च ४९

( मूलादिनक्षत्रजयोः सुतयोः फलम् )

सुतः सुता वा श्वशुरं हतश्च श्वश्रूं च मूलाहिभवौ क्रमेण।
नांत्यादिपादे पतिपूर्वजघ्नी ज्यैष्ठानुजघ्नीद्विपजा न जूके ५०

( विषकन्यायोगः )

मंदारसूर्ये यदि वारुणाहि-वह्न्यर्क्षभद्रातिथयोऽत्र जाता।
विषांगना तां परिवर्जयेन्ना तत्संगते स्युर्बहुलादिदोषाः ॥५१॥

( अथ राशीश्वराः )

राशीशाः स्युर्भौमशुक्रज्ञचंद्रा
भानुः सौम्यो भार्गवो भौमजीवौ।
मन्दो मन्दो जीव इति

( नवांशपतयः )

अंशपाश्च
मेषादेणात्स्यात्तुलातः कुलीरात् ॥ ५२ ॥

( द्रेष्काण-द्वादशांश-होरासाधनम् )

द्रेष्काणाः स्युश्चादिपंचांकपानां
स्यात्सूर्यांशो राशितश्चाथ होरे।
ओजे राशौ भानुपीयूषभान्वो-
र्युग्मे स्यातां ते शशांकार्कयोश्च ॥ ५३ ॥

( त्रिंशांशसाधनम् )

पंचशराष्टनगेषु मिताः स्युः ५।५।८।७।५
भौमशनीज्यबुधास्फुजिदंशाः।
ओजगृहे समभे विपरीतं

( षड्वर्गप्रयोजनम् )

गेहतदर्धद्रकाणनवांशाः ॥ ५४ ॥

स्यात्सूर्यांशस्त्रिंशदंशोऽपि वर्गाः

षट्सौम्योत्थाश्चेच्छुभं नान्यथा सत् ।

वर्गैस्त्र्याद्यैः सद्भिरिष्टं विलग्नं

सद्वारे तद्रिक्तदर्शोनतिथ्याम् ॥ ५५ ॥

( विवाहनक्षत्राणि )

वातानुराधाध्रुवमूलपित्र्य-

करेंदुपौष्णैः शुभदो विवाहः ।

( विद्धनक्षत्रस्याग्राह्यत्वं )

विद्धे शुभैर्भे चरणं त्यजेच्च

खलग्रहैर्विद्धमशेषमुज्झेत् ॥ ५६ ॥

( पंचशलाकावेधः )

वैश्वांत्यपादः श्रवणांबु४नाड्योऽ-

भिजिद्गृहे रोहिणिकात्र विद्धा ।

याम्येन मित्रं श्रवणेन पित्र्यं

हस्तेन बुध्न्यं शशिभेन विश्वम् ॥ ५७ ॥

मूलेन चादित्यमथांबुपेन

स्वात्यर्यमर्क्षेण च पौष्णवेधः ।

वेधस्त्वयं स्यात्करपीडनेऽन्त्य-

पादाद्ययोर्द्वित्रिकयोस्तथांघ्र्योः ॥ ५८ ॥

( सप्तशलाकावेधः )

वसुद्विपे याम्यमघेऽनिलांबुनाथेऽश्विभाग्येऽदितिमूलभे च ।

चित्राजपादे मृगवैश्वदेवे ब्रह्माभिजिद्भे हरिवह्निदैवे ॥५९॥

पूषार्यमर्क्षे भुजगानुराधे गुर्विन्द्रभेऽवुध्न्यरवी शिवाप्ये।
मुक्त्वा विवाहं सकलेऽद्रिरेखे वेधोऽसुमन्येऽप्यवदन् विवाहे।

( वेधदोषपरिहारः )

पीयूषांशौ शोभनैः संप्रदृष्टे सद्धोरायां वा तनुस्थे शुभेऽपि।
लग्नेशे वा लाभगे वेधदोषो भ्रष्टावेशो दूरदूरं प्रयाति ६१

( दोषांतराण्याह )

सूर्योद्भुतः शक्र १४ मितं ग्रहर्क्षं
षण्मासमुज्झेत्तनुचंद्रगं तु।
औत्पातयौद्धं च खलोज्झितं त-
दर्निंदुभुक् पापयुतैष्यमुज्झेत् ॥ ६२ ॥

नक्षत्रसंधौ भयुगं प्रजह्यात् पक्षांतरेण ग्रहणद्वयं चेत्।
पूर्वर्क्षशुद्धिः खलु पक्षमात्रात् षण्मासतः शुध्यति चापरर्क्षम्।
अर्धं च पादग्रहणे त्रिमासं मासं ग्रहर्क्षं निखिलेषु जह्यात्।
यथोत्तरं पादचये [3]त्रिवेदं षंडर्ष्ववारान् ग्रहतोऽर्द्धभादौ ६४
विषुवेऽप्ययने तु वर्जयेत् परपूर्वांतरवासराणि च।
अपरत्र च संक्रमे त्यजे-दुभयत्राष्टि १६ घटीः शुभे बुधः।

( त्रिविधं गण्डान्तम् )

मीनालिकर्कांतिमजार्धनाडी मेषाश्वसिंहादिमजा तथैव।
पूर्णांतिमानंदतिथेरथाद्या नाडींद्रपूषोरगजांत्यनाड्यौ ॥६६॥
मूलाश्विपित्र्यादिमनाडियुग्मं
गण्डान्तमेतन्न शुभे प्रशस्तम्।

(क्रान्तिसाम्यम् )

स्यात्क्रान्तिसाम्यं रविचन्द्रराश्यो-
र्योगश्च षड्द्वादश तन्न शस्तम् ॥ ६७ ॥

( कर्तरी )

ऋजुवक्रगती व्ययार्थगौ यदि पापौ न शुभाय कर्तरी ।
विधुतस्तनुतोऽथ तौ यदा रिपुनीचास्तगतौ न कर्तरी ॥६८॥

( लत्ता[१] )

त्र्या[३]कृति[२२]षट्[६]जिनै[२४]र्नाग[८]नखं[२०] भं हन्ति पुरः क्षितिजादपि खेटः ।
सूर्य इन[१२]प्रमितं परिपूर्णो लत्तपतींदुरग ७ प्रममृक्षम् ॥ ६९ ॥

( पातनक्षत्राणि )

गंशूसावैहव्ययोगांतगं य-
त्तत्पातर्क्षं सर्वकार्ये विवर्ज्यम् ।

( एषां परिहारः )

लग्नं भास्वच्छीतभान्वोर्बलाढ्यं
लत्तापातादींश्च दोषान् निहन्ति ॥ ७० ॥

( चंद्रस्य सग्रहदोषः सपरिहारः )

चन्द्रः सौम्येज्यान्वितः स्याच्छुभाय
नान्यै रिष्फा[१२]ष्टारि[६]गोऽपीह नेष्टः ।
पश्यञ् च्छीतांशुं गुरुः स्वीयवर्गे
केन्द्रे दोषं सग्रहाख्यं हिनस्ति ॥ ७१ ॥

( नक्षत्राणां विषघटिकाः )

पंचाशदर्हत्खगुणाः खवेदाः शक्रादिवः खाग्निनखाश्च दंताः ।
त्रिंशन्नखाश्चापि धृतिश्च नाका नखा महेंद्रेंद्रदशामरेशाः ७२
रसेषवोऽर्हन्नखदिक् दिशश्च
धृतिर्नृपाश्चाब्धियमाः खरामाः ।

---

१ अग्रलत्ता-पृष्ठलत्ता-तत्फलानि च पीयूषधारातोऽवगन्तव्यानि

आभ्यः परस्ताद् घटिकाचतुष्कं
दास्त्रादिकानां विषनाडिकाः स्युः ॥ ७३ ॥

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| अ | भ | कृ | रो | मृ | आ | पु | पु |
| ५० | २४ | ३० | ४० | १४ | २१ | ३० | २० |
| आ | म | पू | उ | ह | चि | स्वा | वि |
| ३२ | ३० | २० | १८ | २१ | २० | १४ | १४ |
| अ | ज्ये | मू | पू | उ | श्र | ध | श |
| १० | १४ | ५६ | २४ | २० | १० | १० | १८ |
| पू | उ | रे | | | | | |
| १६ | २४ | ३० | | | | | |

भभोगनिघ्नोध्रुवकोऽभ्रषड्भि ६०
र्भाज्यः स्फुटः स्याद् ध्रुवको विषाख्याः ।
नाड्यः स्युरेवं विधिना स्फुटाश्च
यात्राविवाहादिषु वर्जनीयाः ॥ ७४ ॥

( अस्य परिहारः )

केंद्रे लग्नोने च कोणे शशांकः सौम्यैर्दृष्टो लग्नपो वापि केंद्रे ।
सौम्यर्क्षेंदुर्मित्रदृग् वा स्ववर्गे लग्नेशो वा क्ष्वेडदोषं निहंति ७५

( सपरिहारोऽष्टमद्वादशलग्नतत्पतितदंशदोषः )

स्वजन्मराशेरथवा विलग्नाद् यदष्टमं भं व्ययभं तदीशः ।
लग्ने न शस्तश्च तथा तदंशो मैत्रैकपत्ये च तयोर्न दोषः ७६

( अष्टमभवनस्य समभवने शुभत्वकथनम् )

समभवनं चेदष्टमभवनम् ।
भवति सुखायुः सुतधनवृद्ध्यै ॥ ७७ ॥

( लग्नलग्नांशयोस्तत्सप्तमगृहस्य च शुद्धिः )

लग्नं तदंशो निजपार्यमित्र–युक्ते क्षितौ भर्तुरमू सुखाय ।

आभ्यां च यद्द्यूनगृहं स्वपार्य–मित्रेक्षितं युक्तमिदं कुमार्याः ।
चेदन्यथा नो शुभमंशपेन लग्नं युतं दृष्टमपि श्रिये नुः ।
द्यूनं तथांशद्युनपेन दृष्टं युतं कुमारीसुखसंपदे स्यात् ॥७९॥

( कुलिक–यामार्धौ )

क्षणाद् द्वितीयादिसमाद्दिने स्या–
न्मंदाद्विलोमं कुलिकश्च रात्रौ ।
एकादयुग्माद्रवितोऽब्धिसप्त–
द्वीष्वैष्टवह्न्यंगमितोऽर्धयामः ॥ ८० ॥

( राशिनवांशशुद्धिः )

मेषादिराशिः शुभयुक्तदृष्टः सर्वो विवाहादिषु सौख्यकृत्स्यात् ।
चापाद्यभागो मिथुनं तुला च कन्यानवांशश्च झषोऽपि कैश्चित्
बुधोज्झितो लग्ननवांशनाथोऽस्तगः शुचे पापशशांकयुक् च
हित्वा न वर्गोत्तममंतिमांशं दद्याच्चरांशं न चरे विलग्ने ॥८२॥
तुलामृगस्थे सति रात्रिनाथे यदेव लग्नं तु स एव चांशः ।
३।१० ९ ५ ४।८

( दृष्टिः )

वर्गोत्तमोऽथ त्रिखमंकबाणं वेदाष्टकं मंदगुरूर्विपुत्राः ॥८३॥
पश्यंति पूर्णं क्रमशस्तथान्ये
पादाभिवृद्ध्यास्तमशेषमेते ।
स्वस्वामिना वाक्पतिचंद्रजाभ्यां
दृष्टो युतो वा बलवान् सराशिः ॥ ८४ ॥

सूर्येन्दु……त्र्युतिर्भतष्टा
० १ ४ ६ १० ११ १५
चेत्खैकवेदांगदिगीशतिथ्यः

धृतेस्त्रयं १८।१९।२० ते दशनो विवाहो
ह्याचार्ययुक्तेक्षितलग्नइष्टाः ॥ ८५ ॥

( पंचकदोषं सापवादमाह )

वलक्षपक्षादिगतास्तु तिथ्यो गण्याः सलग्ना नवभिर्विभक्ताः।
भूद्व्यष्टर्षड्वेदमिते च शेषे क्षयाग्निरुक्चोरनृपाः क्रमेण ॥८६॥
रुजं त्यजेनव्रतनिट्सु, गेहे भौमे सदाग्निं, नृपमर्कसूनौ ।
सेवाद्युसुक्ष्मासुतरात्रियाने चोरं मृतिं ज्ञोद्वहने च संधौ ८७

( जामित्रदोषः )

इष्टात्पूर्वं यो नवांशो दशघ्न-
स्त्याप्तः स्पष्टं लग्नमेतत्सचंद्रम् ।
जामित्रस्थात्सत्खगाद्वापि पापात्
संशोध्याथो तत्कलाः खांभ्रनेत्रैः ॥ ८८ ॥
भक्ता वेदांक्षास्तदा व्याधिमृत्यू
स्यातां सूर्ये त्र्यायशत्रुस्थिते नो ।
सौम्यः खेटः केंद्रकोणेऽस्तहीने
चंद्रं पश्येत्पूर्णदृष्ट्या तदा नो ॥ ८९ ॥

( भृगु-भौमदोषापवादः )

कर्कादित्रयचापगो भृगुसुतः षष्ठो न दोषप्रदो
भौमो ज्ञेंदुगृहेऽस्तगोऽष्टमगृहप्रोक्तं च दोषं हरेत् ।
....................................
.................................... ॥ ९० ॥

( जल-प्रभंजन-वज्रयोगाः )

तिथिवारभसंयुतिर्नवा ९ ढ्या
नग ७ भक्ता तु भवेज्जलं त्रिशेषे ।

यदि पंच ५ तदा प्रभंजनाख्यो
नग ७ शेषे किल वज्रयोग उक्तः ॥ ९१ ॥

( केंद्र-कोणस्थितबुधगुरुशुक्रफलम् )

केंद्रत्रिकोणे मदवर्जिते चेत् सौम्यो ध्रुवं दोषशतं निहंति ।
शतद्वयं चासुरपूजितश्च लक्षं विहन्याद्वचसामधीशः ॥९२॥

( लग्नशुद्धौ विशेषविचारः )

पीयूषभानावथ चंडभानावेकादशस्थे च गुरौ त्रिकोणे ।
केंद्रे मदोने सति लग्नभावे वर्गोत्तमे दोषचयो विनश्येत् ९३
सौम्याख्यारिपुनंदलाभखगताः श्रेष्ठास्त्रिलाभाष्टषट्
संस्थाः पापखगाविधुर्नतनुगः काव्यस्त्रिगोऽसृङ्मृतौ ।
लग्नांशत्रिलवेशकाव्यशशिनो नो षण्मृतिस्था मँदे
सर्वे खेऽवँनिजो व्यये शनिरसन्मूर्तौ बुधेज्यौ मृतौ ॥९४॥

त्याज्ये प्रणीतान् कुसुमे तु दोषान्
तिथ्यर्क्षवारादि नवान् विदित्वा ।
देशोदितं च व्यवहारजातं
वदेत्सुविद्वानिह लग्नजातम् ॥ ९५ ॥

चतुर्भिरिष्टैः शुभदं विलग्नं ततोऽधिकं सत्तरमूलकैश्चेत् ।

( गंधर्वविवाहः )

नेष्टं
तु संकीर्णभुवां विरुद्धे दिने च लग्ने शुभमाहुरन्ये ॥९६॥

( त्रिपष्टीशुद्धिः )

वेदाक्षिवह्नींदुमहीजलांगगुणेंदुदस्रा रविभात्रिपट्टयाम् ।
प्रोक्ता असंतश्च शुभाः पुनर्भूपाणिग्रहे चंद्रबले विशिष्टे ९७

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| ४ | २ | ३ | १ | १ | ४ | ६ | ३ | १ | २ |
| ने | श्रे | ने | श्रे | ने | श्रे | ने | श्रे | ने | श्रे |

( विवाहांगमुहूर्तो दिनशुद्धिश्च )

रजनिमंडनमंडपवेदिकाप्रमुखकार्यसमूहमथाचरेत् ।
परिणयोडुभिरत्र विधोर्वलं नच नवत्रिरसाहनि पूर्वतः ॥९८॥

( गोधूलिः )

शनौ सतीने सुरपूजितेऽस्ते लग्नाष्टषष्ठे शशिवर्जिते च ।
चंद्रार्कयोगे रविषड्विहीने गोधूलिरस्तोभयतोऽर्धनाडी ९९

शीतोष्णनीराकुलितेऽपि काले
दृश्येऽर्धदृश्ये तपनेऽस्तगेऽपि ।
गोधूलिरिष्टा त्रिधनायचंद्रे
मदाष्टमूर्तौ न कुजोऽत्र शस्तः ॥ १०० ॥

( घटिकास्थापनवशाच्छुभाशुभज्ञानम् )

स्वस्थोदपूर्णे वरधातुपात्रे दृश्यार्धसूर्ये घटिका निधेया ।
साग्नित्रये वायुगता च नेष्टा पूर्णाग्निपंचस्वपरत्र शस्ता १०१

( विवाहवेदी-स्तंभोच्छ्रायः )

वेदी वामे सद्मनो वेदहस्ता हस्तोच्छ्राया प्राक्प्लवा स्तंभयुक्ता ।
स्तंभः सिंहात्त्रित्रिराशिस्थसूर्ये शैवे वायौ निर्ऋतेऽग्नेश्च कोणे ॥

( अथ स्पष्टलग्नसाधनम् )

मेषादिषु द्वित्रिगुणाग्नियुग्मकुखैकभूभूखमहीत्रिनिघ्नम् ।
द्विस्थं तु संक्रांतिगतं दिनादिघटीष्वृणं मीननगे परे युक् ॥

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कुं. | मी. |
| २ | ३ | ३ | ३ | २ | १ | ० | १ | १ | १ | ० | १ |
| × | × | × | × | × | × | ध | ध | ध | ध | ध | × |

स्पष्टो भानुः शाककाले शरांबु
४४ वेदैरूने षष्ठिभक्तेऽयनांशाः ।
तैः संयुक्ताद्भानुतो रात्रिकाले
षड्भिर्युक्ताल्लग्नतश्चापि भोग्यैः ॥ १०४ ॥
भुक्तैर्भोगैः संगुणात्स्वोदयात्ख-
३० रामैर्भक्ताद्भोग्यभुक्तं क्रमेण ।
तन्मध्यस्थैः स्वोदयैर्युग्विभक्तं
षष्ठ्या नाड्यः स्युर्यदा लग्नसूर्यौ ॥ १०५ ॥
सायनावेकराशिस्थौ तदंतरगुणोदयः ।
खाग्निहृत्काल ऊनं चेदर्काल्लग्नं निशश्च्युतः ॥ १०६ ॥

( मंडपोद्वासनात्पूर्णं निषिद्धानि )

श्राद्धं दार्शं वार्षिकं चापसव्यं
नो ज्ञः कुर्यान्मंडपोद्वासनांतम् ।

( मंडपोद्वासनदिनानि )

तत्षष्ठोने युग्मवारे च कुर्या-
न्नोजे सत्स्यात्पंचशैलोनिते च ॥ १०७ ॥

( वधूप्रवेशः )

त्रिभवविश्वतिथिप्रमवासरा-
न्नृपदिनेषु विहाय विवाहतः ।
अनववेश्मसु नूतनकामिनी
निशि विशेत्स्थिरभेऽथ ततः परम् ॥ १०८ ॥

( द्विरागमः )

ओजाब्दमासेऽहनि कार्यमेत-
त्पंचाब्दतोऽग्रे नियमो न तत्सत् ।

विवाहभाश्विश्रुतियुग्मचित्रा-
गुरूडुभी रिक्तकुजार्कहीनैः ॥ १०९ ॥
द्विरागमो मेषघटालिसंस्थे सूर्ये मृदुक्षिप्रचलाचलर्क्षे ।
मूले बुधेज्यास्फुजिनांदिनेंऽगे रवीज्यशुद्धौ विषमेऽब्दइष्टः ।

( विवाहानंतरं पित्रादिगृहनिवासनिषेधः )

मधौ वधूस्तातगृहे न तिष्ठे-दाद्ये न भर्तुर्भवने वसेन्न ।
न्यूनाधिमासे शुचिशुक्रपौषे तिष्ठेद्यदानिष्टफलप्रदिष्टा १११

( प्रतिशुक्रदोषापवादः )

कुचकुसुमसमुद्गमो यदास्या-ज्जनकनिवेशन एव कन्यकायाः ।
प्रतिदनुजगुरुर्न दोषदायी किमुत तमो दनुजं कवंधशून्यम् ।
भारद्वाजात्र्यंगिरोवत्सकानां वासिष्ठानां कश्यपानांभृगूनाम् ।
वंशे देशे चोरदुर्भिक्षदोषे ग्राम्यैक्ये वा देवतीर्थे क्षणे च ।
पाणिग्रहे राजभये नवीने वधूप्रवेशे प्रतिभार्गवो न ।
गर्भालसा बालसुता नवोढा नेयुर्भृगोः संमुखदक्षिणे च ११४

नवो भोगः पाणिग्रहणमथवा पौष्णकमृगैः
प्रियः प्रेष्ठो नार्याः करपवनमित्रार्यमभघैः ।
भवेत्प्रीतिर्गाढा युवतिवरयोश्चेन्निर्ऋतिभे
तथा वैश्वे बुध्न्ये भवति युवतिर्नुः प्रियतरा ॥११५॥
ग्रंथाननेकानवलोक्य सम्यक् संदर्भिते विट्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुमनामधेये विवाहसंज्ञं कुसुमं समाप्तम् ॥११६॥

---

( अथ वह्निग्रहकुसुमम् )

संसारवारांनिधिनौः ससारा स्वर्गस्य निःश्रेणिरदूरपारा ।
यतोऽग्निहोत्रं द्विजवैश्यराज्ञामतोऽस्य वक्ष्ये मुनिदिष्टदिष्टम् १

सौम्यायने मिश्रमृगेज्यपौष्णध्रुवेंद्रचित्रादितिभे प्रशस्तम् ।
विरिक्तमंदाररदिने विकार्कि मृगत्रयांगांशगणेऽग्निहोत्रम् ॥२
न लग्नगे चंद्रसिते न चास्त–नीचारिगैर्वाक्पतिचंद्रभौमैः ।
शुद्धेऽष्टमे सूर्यशशीज्यभौमैः केंद्रत्रिकोणोपचयस्थितैः सत्
त्र्यायारिखस्थैरितरैरथाय–त्रिषड्गौ वा शशिनीह यज्वा ।
चापांगजीवेऽथ कुजे क्रियस्थे सप्तांबरे वा जयति द्विजेंद्रः
ग्रंथाननेकानवलोक्य सम्यक् सन्दर्भिते विठ्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुमनामधेये वह्निग्रहाख्यं कुसुमं समाप्तम् ॥ ५

## ( अथ राज्याभिषेककुसुमम् )

राज्ञां विनाज्ञां व्यवहारसिद्धिर्यतो न तस्मान्नृपतिर्जनैस्तु ।
पट्टेऽभिषिक्तो लभते प्रतिष्ठां कालं ततस्तस्यवदामि शास्त्रात्
माघादिषट्के मलचैत्रशून्ये पक्षे सिते रिक्तकुहूकुजोने ।
दिने दिवा क्षिप्रमृदुध्रुवेंद्र–विष्णूडुभिर्भूपपदाभिषेकः ॥२॥
दशेशजन्मेशसितार्यसूर्यैः सजन्मलग्नेशकुजेंदुभिश्च ।
उद्यद्बलाढ्यैर्नरवृद्धिलग्ने स्थिरे च राज्ञः पदमामनंति ॥ ३

त्रिकोणकेंद्रत्रिधनायसंस्थाः
सौम्याः परे त्र्यायरिपौ शुभाः स्युः ।
लग्नव्ययाष्टारिगतः शशांकः
शुभाय नो राजपदप्रदाने ॥ ४ ॥

तुर्ये पदे वापि गुरौ त्रिलाभे सूर्यार्किजौ भूमिपतिश्चिरायुः
लग्ने त्रिकोणे च गुरौ सिते खे षष्ठे कुजे स्यान्नृपतिर्महेंद्रः
ग्रंथाननेकानवलोक्य सम्यक् सन्दर्भिते विठ्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुममनामधेये राज्याभिषेकं कुसुमं समाप्तम् ॥ ६

( अथ यात्राकुसुमम् )

द्विजेश्वराणामवनीश्वराणां विना न यात्रां भवतीष्टसिद्धिः।
अतो मुनीनां वचनानुसारादादौ विचारात्प्रवदामि यात्राम्।

( जन्मलग्नराशिज्ञानाभावे निर्णयः )

ज्ञानं न येषां किल जन्मलग्नं शशिश्च तेषां शकुनादिभिः स्यात्।
फलं ततो जन्मविलग्नराशि–द्वारैव सर्वं शुभमत्र वाच्यम् २

( यात्रा सुखेन भविष्यति न वेति )

पृच्छाविलग्नं तु यदा चरं चे–च्छुभैर्युतं दृष्टमिदं शुभाय।
स्थिरं न यात्राकरमत्र दृष्टिः शुभस्य योगोऽपि फलाय वाच्यः ३
प्रश्नलग्नमशुभैर्युतं तथा दृष्टमेतदपि चेद्विमूर्तिमत्।
तत्र याति यदि मानवो हठाद् भग्नचेतनबलो निवर्तते ॥४॥
चेत्प्रश्नकाले शुभवाद्यघोषः शुभं च वाक्यं सितपुष्पगंधाः।
फलं हिरण्यादि शुभं च दृष्टं सिद्धौ तु तैलादि न सिद्धिहेतुः ५
चेत्प्रश्नलग्नादशुभोऽष्टमे वा लग्ने ग्रहः शोभनदृष्टिहीनः।
सिद्धिं न कुर्याद् गमनस्य वक्री तथैव लग्ने निधनं च तत्पः ६
प्रश्नस्य लग्ने बलवान् ग्रहश्चे–देकोऽथवा द्वौ शुभदृष्टियुक्तौ।
लाभं च तस्याशु वदेद्धनस्य घनस्य भूपस्य तु भूमिजाभम् ७

( संक्रांतिपरत्वेन यात्रा )

तुरगकेसरिमेषगते रवौ भवति यानमनंतसुखावहम्।
वुधशनैश्चरकाव्यगृहेऽपि तद् भवति मध्यमिदं न परेषु सत् ८

( यात्रातिथयः )

द्विकत्रिपंचेश्वरदिक्नगाद्याः
कामस्तु यात्रा फलदास्तु तिथ्यः।

शुक्रादिमानाऽथ शुभांशवारा-
स्तथैव वर्गाश्च शुभाः प्रदिष्टाः ॥ ९ ॥

( योगिनी )

नवैकतिथ्यो गिरिशाग्नयश्च विश्वेषवोऽर्काब्धय इंद्रषष्ठः ।
तिथ्यद्रयो दिग्विमिता अमाष्ट-इंद्रक्रमात्संत्यज योगिनीस्तु

पू

| उ | | | | द |
|---|---|---|---|---|
| | ८-३० | १-९ | ३-११ | |
| उ | २-१० | | १३-५ | द |
| | ७-१५ | ६-१४ | ४-१२ | |

प

( कालपाशौ )

प्राच्यां शनींदू गुरुरर्कशुक्रौ भौमेंदुपुत्रौ गमने न शस्ताः
भौमः शनींदू ज्ञगुरू सितार्कौ याम्यादियाने धनसौख्यदाश्च
रविर्विलोमेन कुवेरदिक्तः कालस्तु तत्सन्मुख एव पाशः ।
रात्रौ विलोमाद्भवतोऽपि तौ तु यात्रासु युद्धे परिवर्जनीयौ १

( यात्रानक्षत्राणि )

दास्रेंदुपुष्यादितिहस्तमैत्र-श्रवोयुगं पूषभमुत्तमं भम् ।
त्रियुग्ममूलांबुपकानि मध्या-न्यन्यान्यनिष्टान्यंगभूत्रिपंच १
ताराश्च नेष्टाः सुरराजमृक्षं
मध्यं च कैश्चिन्मुनिभिः प्रदिष्टम् ।

( नक्षत्रशूलम् )

ज्येष्ठाजपादं कभमर्यमाख्यं
प्राच्यादि नेष्टानि भशूलकानि ॥ १४ ॥

( नक्षत्राणां त्याज्यघटिकाः )

पूर्वांतकाग्न्येयमघासु भूप १६-

नग ७ स्व २१ रीशा ११ घटिकास्तथाद्याः ।
स्वातीद्वयेंद्रोरगभेषु शक्रा १४–
अवश्ययाने घटिकास्तु हेयाः ॥ १५ ॥
अग्नेर्धिष्ण्यात्सप्तसप्तैव भानि
प्रादक्षिण्यादिंद्रदिक्तो लिखेत् ज्ञः ।
रेखामाग्नेयान्मरुद्दिग्गतां च
नोल्लंघ्येयात् पारिधीमल्पकार्ये ॥ १६ ॥




आवश्यके कर्मणि पारिधीं तु
रेखां विलंघ्यापि नृपः प्रयायात् ।
विहाय शूलानि यदि स्वदिका–
नि लग्नशुद्धिः समवाप्यते चेत् ॥ १७ ॥
प्राच्यैर्यायादुत्तरस्यां तु तत्स्थैः
प्राचीयाम्यैर्वारुणीं तत्स्थितैश्च ।
याम्यां प्राच्यैरग्निकोणं तु सव्या-
देवं दिग्भैः कोणकाष्ठां प्रयायात् ॥ १८ ॥
मिश्रैर्ध्रुवैर्दारुणभैस्तथैव क्षिप्रैस्त्रिभागेषु दिनस्य नेयात् ।
निशात्रिभागेषु तथैव मैत्रैरुग्रैश्चरैश्चापि नहि प्रयायात् ॥१९॥

( सर्वदिक्षु गमनम् )

श्रुत्यर्कचांद्रेषु तथैव पुष्ये नायं यमः कालभवः प्रदिष्टः ।
हस्तेन पुष्येण तथाश्विनेन मैत्रेण सर्वास्वपि दिक्षु यायात् २

( अयनपरत्वेन गमनम् )

सौम्यायने चेद्रविशीतभानू
प्राचीमुदीचीं व्रज दक्षिणे चेत् ।
याम्यां प्रतीचीं यदि भिन्नकेऽह्नि
सूर्यायनं निश्ययनं सुधांशोः ॥ २१ ॥

भूरि हानिरन्यथा क्लेशदुःखबंधनम्–
जायते महीभृतोऽतो विचार्यमायनम् ॥ २२ ॥

( नक्षत्राणां जीवपक्षादिसंज्ञा )

राह्वाक्रांतं भं मुखं तत्पुरस्ताद्
भुक्तानि स्युर्विश्व १३ संख्यानि जीवः ।
तस्मादग्रे पुच्छभं तत्पुरस्ताद्
रामक्ष्माभिः १३ संमतान्यत्र भानि ॥ २३ ॥

( जीव-पक्षादीनां फलम् )

पक्षे मृते चेद्रविरत्र जीवे चंद्रः शुभं यानमतोऽन्यथाऽसत्
द्वौ जीवपक्षेऽतिशुभं निरुक्तं तौ द्वौ मृते कष्टकरं प्रदिष्टम् २
मृतर्क्षतः पुच्छमभीष्टदायि ततः शुभं स्यान्मुखभं गमेषु ।
स्थायी रविश्चंचलइंदुरेको जीवे तयोः स्याज्जयदः क्रमेण २

जीवे यदा द्वौ तु तदा च संधि–
र्मृते द्वयोः स्यात्तु पराजयश्च ।

( विडल-आडलयोगौ )

यत्साभिजिद्धं रवितोऽद्रि ७ तष्टं
त्र्यंगे ३।६ [२]द्व्यंगे स्तो विडलाऽऽडलौ च २६

( विडलाऽऽडलयोः फलम् )

कदापि नात्र संचलेदितीदमाह देवलः ।
परे तडागसंगरे गजादिके हितौ न तौ ॥ २७ ॥

( कुलोपकुलचक्रं सफलम् )

कुलगणेऽश्विभगेंदुमघाद्विपा–ग्निवसुतक्षगुरूत्तरकात्रयम् ।
निर्ऋतिभं विषमास्तिथयो रवि–र्गुरुशनींदव औपकुलान्यथ ।
अदितिहस्तजलाजपदांत्यभं हरिमरुत्कयमोरगदैवतम् ।
मनुजलार्कवसुप्रमितातिथी सितकुजौ च पराणि कुलाकुले २९

| | नक्षत्राणि | तिथयः | वाराः |
|---|---|---|---|
| कुलं | अ. पू फा. मृ. म. वि. कृ. ध. चि. पुष्य. उफा. उषा. उ भा. मू. | १-३-५-७-९-११-१३-१५ | र. गु. श. चं. |
| उपकुलं | पुन. ह. पू षा. पू भा. रे. श्र. स्वा. भ. आश्लेषा. रो. | ४-८-१२-१४ | मं शु. |
| कुलाकुलं | आर्द्रा. शतता. अनु. ज्ये. | २-६-१०-३० | बु. |

कुलगणे विजयी नगरस्थितो ह्युपकुलेऽपि चलन्नृपतिर्जयी ।
कुलकुले धरणीश्वरयोर्भवेदपि च संधिररं बहु युध्यतोः ३०

( सर्वाङ्कमेलनं सफलम् )

उडुवारयुताः सितादितिथ्यः
त्रिरगेभा ७-८-३ग्निहृता यदादिमे खं ।

न सुखं त्वपरे धनस्य नाश-
श्चरमे मृत्युरिहांकतः सुखानि ॥ ३१ ॥

( पथि राहुचक्रं सफलम् )

अश्विन्यादि चतुष्टयं क्रमविलोमाभ्यां लिखेत्साभिजित
सूर्ये धर्ममुखेषु मोक्षधनगोधर्मापवर्गस्थितिः ।
चंद्रो धर्मधनापवर्गभगतो धर्मस्थितः शस्यते
चक्रे मार्गतमोऽभिधे क्रमगतो यात्रासु सांवत्सरैः ३

| | |
|---|---|
| धर्मः | अ. पु. आ. वि. अनु. ध. श. |
| अर्थः | भ. पु. म. स्वा. ज्ये. श्र. पू. भा. |
| कामः | कृ. आ. पूफा. चि. मू. अ. उ. भा. |
| मोक्षः | रो. मृ. उफा. ह. पूषा. उषा. रे. |

( मेषादिराशीनां घातचंद्रः सापवादः )

मेषः कन्या कुंभसिंहौ मृगास्यो
युग्मं चापो गौर्झषः सिंहचापौ ।
कुंभो मेषादेष्वमी घातचंद्रा
याने युद्धे राजसेवाविवादे ॥ ३३ ॥
रोगे वाहारोहणे ते निषिद्धा
मौंजीचूडातीर्थयात्राविवाहे ।
अन्नप्राशे मंगले नैव चिंत्याः
प्राचीनानामेवमाज्ञा प्रमाणम् ॥ ३४ ॥

( घाततिथयः )

नंदाऽलिमेषे, मिथुनेंदुभे च भद्रा जया सिंहधनुर्घटेषु ।
रिक्ता तुलायां मकरेऽथ पूर्णा झषांगनागोषु च घाततिथ्यः३५

| मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कुं. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ५ | २ | २ | ३ | ५ | ४ | १ | ३ | ४ | ३ | ५ |
| ६ | १० | ७ | ७ | ८ | १० | ९ | ६ | ८ | ९ | ८ | १० |
| ११ | १५ | १२ | १२ | १३ | १५ | १४ | ११ | १३ | १४ | १३ | १५ |

( घातवाराः )

मेषस्य युग्मस्य मृगस्य कर्क-
स्याथो तुलाकुंभकयोः प्रणीताः ।
चापालिमीनस्य वृषांगनार्की
भानां तु भानोः किल घातवाराः ॥ २६ ॥

| वाराः | र. | चं. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|---|
| | | | | | | वृश्चि. | वृषभ. |
| राशयः | मे. | मि. | मकर. | कर्क. | तु. | ध. | कन्या. |
| | | | | | कुं. | मी. | सिंह. |

( घातनक्षत्राणि )

मघा करस्वात्यनुराधिका च मूलं श्रवो वारुणपूषभानि ।
याम्यं कभं शंकरभं च सार्पं मेषादिघातर्क्षमिदं न याने ॥२७॥

| मे. | वृ. | मि. | कर्क. | सिं. | कन्या. | तु. |
|---|---|---|---|---|---|---|
| मघा. | हस्त. | स्वा. | अनु. | मू. | श्र. | शत. |

| वृ. | ध. | म. | कुं. | मी. |
|---|---|---|---|---|
| रे. | भ. | रो. | आर्द्रा. | आश्लेषा. |

( दिग्द्वारराशिलग्नतो गमनफलम् )

प्राच्यास्त्रिरावृत्ति भवंति सव्या-
दंजादयो दिक् तनवः शुभाय ।

प्रत्यग्दिशातश्च त एव चेत्स्यु-
र्यदा तदा नो गमने प्रशस्ताः ॥ ३८ ॥

| | | | |
|---|---|---|---|
| पूर्वे. | मेष. | सिंह. | धनुषः. |
| दक्षिणे. | वृ. | क. | म. |
| पश्चिमे. | मि. | तु. | कुं. |
| उत्तरे. | क. | वृ. | मी. |

( सन्मुखशुक्रदोषः सपरिहारः )

यस्मिन् हि गोले भ्रमतीह यत्रा-
प्युदेति वा यत्र चरेद्दिगर्क्षे ।
त्रिधापि साम्मुख्यमुशंति शौक्रं
परं तु हेयो ह्युदयो विधिज्ञैः ॥ ३९ ॥

( सापवादः शुक्रस्य वक्रास्तादिदोषः )

नीचगते च सितेऽस्तगते वा शत्रुगृहे विपरीतगतौ वा ।
संचलनान्नृपतेर्न जयः स्यात्पृष्ठगते शशिजे कुशलानि ॥४०॥

( शुक्रस्यांधत्वं तत्र प्रयाणफलम् )

यावच्चंद्रः पूषगो मेषगश्च
तावच्चक्षुर्वर्जितो भार्गवः स्यात् ।
न स्याद्दुष्टो दक्षिणे चाग्रतश्च
व्यत्यासाद्वा प्राक्प्रतीच्योस्तु याने ॥ ४१ ॥

द्विजेश्वरो वापि गुरुः कविर्वा
मध्ये पथोऽस्तं यदि याति दैवात् ।
राजा च तिष्ठेदुदयावधीदं
बुधे विलोमं सति सन्मुखत्वे ॥ ४२ ॥

( यात्रायां लग्नशुद्धिविचारः )

यो जन्मलग्नादथ जन्मराशे
राशिर्भवेदष्टम एव लग्ने ।
नो सत्तथांशोऽस्य रिपोर्गृहाद् यः
षष्ठः स लग्नेऽपि शुभाय न स्यात् ॥ ४३ ॥
सर्वत्र राशिं विवलस्य राशिं
राशिं स्वशत्रोः खलभं घटं च ।
पृष्ठोदयं वक्रभमृद्धिहीनं
मीनं तदंशाँश्च गमे विजह्यात् ॥ ४४ ॥
वक्री ग्रहः केन्द्रगतो निषिद्धो
वारोऽस्य वर्गोऽपि तनौ न शस्तः ।
स्वजन्मराश्यंगपतेर्द्विषश्च
तनौ न शस्तो मुनिभिः प्रदिष्टः ॥ ४५ ॥

( दिशीशाः, केंद्रगते दिगीशे शुभा यात्रा )

सूर्यः सितो भौमतमो यमाश्च विधुर्बुधः सूरिरिमे दिगीशाः ।
प्राच्यादितो लाभगते दिगीशे नेयादमुष्मिन् व्रज केन्द्रगे तु॥

( लालाटिकयोगः सफलः )

लग्ने भानुः शुक्रआये व्ययेऽसृक्
खेंऽर्कांष्टेऽगुः सप्तमे मंद इन्दुः ।
षट्पुत्रे ज्ञो नीरगो द्वित्रिसंस्थः
सूरिः प्रोक्ता भालगा नो शुभास्ते ॥ ४७ ॥

---

१ ऋद्धिः—उपचयस्थानम् ।

[1]वेशिः सौम्येनान्वितो लग्नवर्ती
ये वा सद्भिः संयुता जन्मकाले ।
ते चेल्लग्ने राशयो जन्मराशे-
र्ये वा वृद्धौ[2] जन्मलग्नाच्च सन्तः ॥ ४८ ॥

यात्राविलग्नं यदि जन्मराशिः
जनुर्विलग्नं त्वथवा तदीशः ।
विलग्नगोऽमूनि शुभानि याने
राशीश्वरश्चेच्छुभखेचरः स्यात् ॥ ४९ ॥

ये स्वर्क्षगा मित्रगृहोच्चगा वा
तनौ खलास्तेऽपि शुभाय खेटाः ।
जन्मर्क्षलग्नाधिपती च केन्द्रे
स्ववैरिवारोऽल्पफलस्तनौ सत् ॥ ५० ॥

( यात्रायां दिग्परत्वेन कालनियमः )

उषः प्रशस्तं न हरेर्दिशायां
तथाभिजिद् याम्यदिशं विहाय ।
गोधूलिकं श्रेष्ठमृते प्रतीचीं
विनोत्तरां श्रेष्ठतरो निशीथः ॥ ५१ ॥

पूर्वाह्णकाले व्रज सोमकाष्ठां
मध्याह्नकालेऽपि च वासवाशाम् ।

---

१ सूर्यतो विविधुभिर्नभश्चरैर्द्वादशद्रविणभोभयस्थितैः । वोशिवेश्युभयचारि नामतो दैवविद्भिरिह संमतं स्मृतम् (८) इति जातकचंद्रिकोक्तनानायोगाध्यायगतसूर्ययोगोक्तप्रकारानुसारेण वेशिशब्दार्थोऽनुसन्धेय इति ।

२ वृद्धिः–उपचयस्थानम् ।

याम्यां पराह्ने व्रज कार्यसिद्धयै
निशीथकाले व्रज वारुणीं च ॥ ५२ ॥

( नक्षत्रपरत्वेन प्रस्थाने विशेषः )

प्रस्थाय चान्द्रे शिवभेऽवतिष्ठन् पुनर्वसौ यल्लभते सुखानि ।
तथैव मैत्रे कृतसंप्रयाणः शाक्रे वसन् यातु जयाय मूले ५३

प्रस्थाय हस्ते निवसँश्च चित्रा-
युगे विशाखागमनाज्जयी स्यात् ।
वस्वन्त्यपुष्ये निजसीम्नि यातः
स्थित्वैकरात्रं लभते नृपः क्ष्माम् ॥ ५४ ॥

( लग्नशुद्धौ विशेषः )

षष्ठाष्टरिष्फे न शुभाः शुभाः स्युः
वृध्यन्यतः पापखगाः शनिः खे ।
अस्ते भृगुर्लग्नरिपुव्ययाष्ट
विधुस्तनूपांत्यरिपुत्रये च ॥ ५५ ॥

( लग्नादिद्वादशभावास्तद्गतग्रहवशाच्छुभाशुभफलम् )

मूर्तिर्धनं सेवकवाहमंत्राः
शत्रुश्च पंथाः खलु जीवनं हृत् ।
व्यापारलाभौ व्ययकोऽत्र खेटे
शुभे शुभं पापखगेऽत्र दुःखम् ॥ ५६ ॥

( शुभाशुभग्रहाः कं स्थानं न घ्नंति )

त्रिलाभभावं न निहंति पापः
पदं रविर्भूतनयो हतो न ।

पुष्णंति सौम्याः सकलं हि भावं
विनारिमस्तं भृगुरिन्दुरायुः ॥ ५७ ॥

( सद्दृष्टांतं ग्रहः विशेषफलं ददातीत्याह )

विषं यथा रोगवशाद्धितार्थं
घृतं समाक्तं मधुना विषं स्यात् ।
एवं ग्रहः स्वं फलमत्र हित्वा
योगोद्भवं संतनुते विशिष्टम् ॥ ५८ ॥

( द्विजादिवर्णानां नक्षत्रादिवशात्फलप्राप्तिः )

द्विजन्मनामृक्षगुणैः फलं स्याद्
योगैस्तथा स्याद्धरणीपतीनाम् ।
चौरादिकानां शकुनैश्च सिद्धिः
परस्य लोकस्य मुहूर्तशक्तेः ॥ ५९ ॥

( लग्नशुद्धौ विशेषयोगाः )

लग्नगतः स्याद्देवपुरोधा वित्तगतो ज्ञो भ्रातरि भानुः ।
शशिनि मदस्थे समुदयभानौ बुधगुरुशुक्रैर्गतधनभावैः ॥६०॥
सुखे कलाधरः स्थितः कविर्बुधेन युज्मदे ।
तथा नृपो जयत्यरीन् सुमार्गतः खलान् जनान् ॥ ६१ ॥
कलाधरो यदा मदे कविर्बुधः सुखाश्रयः ।
तदा गतस्य शत्रवो भ्रमंति निंदका इव ॥ ६२ ॥
त्र्याये ३।११ दिनेशः सहजे शनिः स्या-
ल्लग्ने गुरुः शत्रुगृहे महीजः ॥
भृगुर्यदि स्यादनुकूलवर्ती
तदा लभेत्किं नहि चक्रवर्ती ॥ ६३ ॥

लग्ने दिनेशो रिपुगः शनिः स्यात् पदे शशी यस्य जयप्रयाणे ।
तस्यारिसेना वशमेति शीघ्रं कांतेव कामोग्रशराभितप्ता ६४
लग्ने कुजार्की दशमे रविः स्याद् बुधोऽथवा दैत्यपुरोहितश्च ।
लाभे पंदे वा नृपतेर्गतस्य शत्रो रमा स्यादभिसारिकेव ६५

तनौ गुरुः सप्तमगो हिमांशु-
र्लाभे रविः सौम्यसितौ पंदस्थौ ।
पराक्रमे भूसुतभानुपुत्रा-
वस्मिन् हि योगे किमसाध्यमस्ति ॥ ६६ ॥

शत्रुत्रिलाभेषु महीजमन्दौ यत्रैव कुत्रापि गुरुज्ञशुक्राः ।
ओजस्विनश्चेन्नृपतिर्जयी स्यात्प्रलंबयुद्धे मुसलीव वीरः॥६७॥
धने ज्ञशुक्रामरनाथपूज्याः कान्तागृहे वल्गति यामिनीशे ।
लग्ने दिनेशे नृपतिः प्रयातः स वैनतेयो रिपुसर्पसंघे ॥ ६८ ॥
जीवे विलग्ने मदने शशांकः पापस्तृतीये सुखगौ सितज्ञौ ।
यस्य प्रयाणे नृपतेस्तु तस्य विद्विट् क्षयं याति तमो दिवैव६९
लग्ने सुरेज्ये यदि वा क्षपेशे षष्ठे दिनेशे पंदगे च मन्दे ।
सुखे सिते ज्ञे तनयालयस्थे मातेव यात्रा बहुसौख्यकर्त्री ७०
चतुर्थलाभत्रिगते सितेऽस्मिन् केंद्रोपयातेज्यनिरीक्षिते चेत् ।
पापैर्न सप्तत्रितये महीशः किं तद्धनं यन्न लभेत्स्ववीर्यात् ७१
लग्नारिसप्तत्रिचतुर्थसंस्थाः शुक्रारजीवार्किशशांकपुत्राः ।
तस्यारिनारीनयनांबुधारा हसंति धाराधरजास्तु धाराः ७२
वैरिमंदिरविहारिभास्करे नैधनोनभवने निशाकरे ।
लग्नगे सुरगुरौ चलन्नृपः शत्रुसैन्यदहने धनंजयः ॥ ७३ ॥

सितार्कजीवा धनतस्त्रये चेद् रिपौ कुजः सार्किरिनो हि यस्य
तस्यारिसैन्यं विलयं प्रयाति ब्रह्मद्विषो यद्वदलं कुटुंबम् ७
लग्नारिधर्मत्रिपदायगेषु रवींदुजीवार्किकुजेंदुजेषु ।
बुधे ससूर्ये कटकं रिपूणां ब्रह्मद्विषः संततिवद्विनश्येत् ७
एकांतरे षड्भवनेषु खेटा दैत्येंद्रमंत्री यदि पृष्ठवर्ती ।
यातस्य वीर्यं सहते न शत्रू रथांगपाणेरिव कालनेमिः ॥७६
बुधसितौ यदि वा बुधवाक्पती त्यज तदृक्षमिमौ युगपद्युतौ
अनिधनं सुधनं लभते नृपो गुरुहितादिव शिष्य उरुप्रिय
यस्य लग्नसहजार्थसंस्थिताः शुक्रसूर्यशशिसूनवो यदि ।
शत्रवोऽस्य विमुखा रणांगणे पापिनां बहुमनोरथा यथा ७

यस्योद्योगे काव्यविद्वाक्पतीना-
मेकश्चेत्स्यात्केंद्रकोणानुयायी ।
योगो द्वाभ्यां चाधियोगोऽत्र सर्वैः
प्रोक्तो विद्भिश्चापि योगाधियोगः ॥ ७९ ॥

योगे नूनं सर्वकार्यार्थसिद्धिः
क्षेमं लाभश्चाधियोगे प्रदिष्टः ।
लक्ष्मीः सौख्यं चैव योगाधियोगे
संपद्धस्ते कीर्तिता गर्गमुख्यैः ॥ ८० ॥

अरिपराक्रमराज्यरिपूदयां बुधिभवेषु रविप्रमुखाग्रहाः ।
गुरुदिने यदि यानमसौ रिपून् जयति देवपतिर्दनुजानिव ८
जीवार्कभौमोष्णगुसंभवानामुच्चे विलग्ने यदि कोऽपि खेटः
कर्के यदींदुः किल यस्य याने तच्छत्रवो विंध्यदरीनिवा साः ८

चेज्जन्मलग्नं त्वथ जन्मराशिर्यात्रा विलग्नं त्वथवा तदीशः ।
लग्नेऽथ ताभ्यां चयभानि लग्नं यस्य प्रयाणे स महीमहेन्द्रः ८३

मृगालिजूका मिथुनत्रयं चेत्
स्वेशान्वितं यस्य शनिश्च लग्ने ।
तद्राजसेना क्षपयेदरीणां
सेनां क्षणाद् द्यूतमिवार्जितं स्वम् ॥ ८४ ॥

सौम्याः केंद्रे पंचनंदस्थिताश्चेच्छत्रुत्र्याये पापखेटाः प्रयाणे ।
कार्यं सर्वं संविधायातिहृष्टा वित्तैः पुष्टास्ते समायांति गेहम् ८५

तनौ धने लाभगृहे शुभाश्चे-
द्रविः पदे त्र्यारिगृहे कुजार्कीं ।
यात्रासु पुष्टं धनमाप्नुतेऽसौ
गौरीशभक्त्येव सुखं विशिष्टम् ॥ ८६ ॥

नरेशयोगैरिव जातकोक्तैर्यात्रां विदध्याद्यदि भाग्यशाली ।
वधं ससंघं कुरुते स शत्रोर्जयद्रथाख्येव सखा मुरारेः ॥८७॥

( विजयादशम्याः सर्वदैव शुभत्वम् )

आश्विनमासि सिता दशमी या सिद्धिकरी जयदा गमने सा
वैष्णवभेन युता तु विशेषाद्भक्तियुता नृहरेरिव पूजा ॥८८॥

( यात्रायामन्यो विशेषः )

मनोविशुद्धौ सकलार्थसिद्धि-
स्तां प्राप्य विद्वान् विदधातु यात्राम् ।
तथा निमित्ते शकुने च पूज्ये
ते चापि सिद्धेः प्रतिभूत्वयाने (?) ॥ ८९ ॥

( यात्रायां निषेधः )

उद्वाहमौंजीत्रिदशप्रतिष्ठाऽप्याशौचकं यावदिदं न पूर्णम्
तावन्न यात्रां विदधीत वृष्टावकालजायामपि जीवनेच्छुः
सहस्यमासादिचतुष्टयोत्थाह्यकालवृष्टिर्द्विपदादिपादैः ।
समंकितायां भुवि दोषमाहुरल्पाधिकत्वात्फलतारतम्यम्

प्रस्थितस्य न दोषोऽस्ति मार्गमध्ये तु भूपतेः ।
सूर्येन्द्वोर्बिम्बदानेन यायादावश्यके नृपः ॥ ९२ ॥

( एकस्मिन् वारे प्रवेश-गमनादिनिषेधः )

चेदेकवारे नृपतेर्गमश्च प्रवेशनं स्यात्तु तदा विचार्यम् ।
प्रवेशकालान्नवमेऽह्नि यानं यानात्तथा वेशनमप्यनिष्टम्

( प्रयाणकालात्पूर्वं किं कर्तव्यम् )

संतर्प्य वह्निं हविषा द्विजांश्च गोभूहिरण्यादिभिरादृतः स
ज्येष्ठान्नमस्कृत्य कलत्रमित्रपुत्राँश्च संतोष्य नृपः प्रयायात्
नत्वेष्टदेवं स्वदिगीश्वरं च श्रद्धासमेतः सितमाल्यवस्त्रः ।
स्वरानुरूपं विनिधाय पादं वा दक्षिणं वाग्यत एव यायात्
पदानि गत्वा दशनोन्मितानि प्राग्रादियानैर्गजचक्रिवाहैः
नराख्ययानेन शुभानि पश्यन् प्रसन्नचेता नृपतिः प्रयायात

( कार्यवशाद् स्वगमनाभावे किं कार्यम् )

कार्यादिना चेत्स्वगमो नहि स्या-
त्तदा द्विजादिः सफलोपवीतम् ।
शस्त्रं मधुः स्वादु फलं तथान्य-
दभीष्टवस्त्राद्यपि चालयेद्वा ॥ ९७ ॥

( कस्मात्स्थानात्कियत्स्थानं प्रयाणं कार्यम् )

स्वमंदिराद्देवगृहाग्निहोत्रगेहान्महिष्या अपि मंदिराच्च ।
सीमांतरं वाथ गृहांतरं वा ग्रामाद्बहिश्चापश्शतं प्रयायात् ९८

( नृपादिभिः कति दिनान्येकस्मिन् स्थाने स्थेयम् )

राजा तथा मण्डलपस्तथान्यो दिक् सप्त पंचप्रमितान्यहानि ।
नैकत्र तिष्ठेदथ पूर्वतोऽपि संसेषुवह्न्यक्षिदिनं स्थितिश्च ॥९९॥

( दिनपरत्वेन कतिक्रोशमितं प्रयाणं कार्यम् )

आद्ये दिने क्रोशमितं प्रयाणम् द्वितीयके योजनमात्रमेव ।
सार्धं तथा योजनकं तृतीये यथेष्टयानं परतो नृपस्य १००

( प्रयाणात्पूर्वं निषिद्धानि )

क्रोधं तैलं द्यूतमांसे गुडं च मद्यं वांतं रोदनं यानकाले ।
पंचाहं च क्षौरकर्म त्रिरात्रं दुग्धं सप्ताहं रतिं वर्जयेच्च १०१

( यात्रादिने रतिनिषेधः भार्यारजस्वलायां विशेषः )

यात्रादिने नैव रतिं प्रकुर्यान्नारी यदि स्यात्कुसुमेन युक्ता ।
रतिं विधायैव नृपः प्रयायादावश्यके चेन्नपरं सुलग्नम् १०२

( प्रयाणसमयात्पूर्वं भक्ष्यपदार्थविचारः )

अर्कपत्रं तंदुलांबु घृतं श्राणा[1] हविष्यकम् ।
हेमांब्वपूपं जंबीरं नीरं गोमूत्रमेव च ॥ १०३ ॥
यवान्नं पायसगुडे रक्तं मुद्गोदनं तथा ।
पक्षादितो भवेद्भक्ष्यं यदभक्ष्यं च तत्स्मरेत् ॥ १०४ ॥

( सूर्यादिवारपरत्वेन भक्ष्यपदार्थाः )

सर्जिका[2] पायसं चैव कांजिकं शृतदुग्धकम् ।

---

१ श्राणा–राबडी । २ सर्जिका–सर्जिकाक्षार ।

दधिशृतं पयोऽप्यद्यात्कृसरान्नं रवेर्दिनात् ॥ १०५ ॥

( नक्षत्रदोहदः )

अक्षतस्विन्नमाषाश्च तिलास्तंदुलसंयुताः ।
माषा गव्यं दधि चाज्यं दुग्धं मधु पलं त्वसृक् ॥ १०६ ॥
पायसं चाषमांसं च मार्गं शाशं च षष्टिका[1] ।
प्रियंग्वपूपहरितः फलं कौर्मं च सारिकम् ॥ १०७ ॥
गोधिकं शाल्यहाविष्ये कृसरान्नं च मुद्गकम् ।
ओदनो यवपिष्टं च मत्स्यभक्तस्तथैव च ॥ १०८ ॥
चित्रान्नं दधिभक्तश्च नाक्षत्रो दोहदस्त्वयम् ।
तिथिवारभदिग्दोषशांतये दोहदा अमी ॥ १०९ ॥

( दिग्दोहदः )

घृतौदनं प्राग् किलपिष्टकान्नमवाक्प्रतीच्यामनिमेषभक्तम्
तथोत्तरस्यां घृतपायसं च भुक्त्वा नृपो यातु निजेष्टसिद्ध्यै ११

( शुभशकुनानि )

चंदनपुष्पनृपाश्च सुगंधिद्रव्यसरोजसुचामरमीनाः ।
रोचनवस्त्रमृदंगसपुत्रस्त्रीसितगोगजघोटकशंखाः ॥ १११ ॥
घंटाभेरीनादवेश्यावितानच्छत्रादर्शाऽधूमवह्निप्रदीपाः ।
दोलावीणागीतपूर्णोदकुंभोष्णीषक्षीरालंकृतस्त्रीकुमार्यः ॥
भूम्युद्धृते गोमयमृत्तिके च विप्रा मृगाः श्रीगुरुरर्थहस्तः ।
दूर्वाः स्रजो दर्भरथाश्च धान्यमाज्यं दधिज्यौतिषिकश्च वाणी
धौतांबरो मौत्रिक ऽ इक्षुशस्त्रे शावं तथा रोदनवर्जितं च
पलं च मद्यं सुरभिः सवत्सा व्रजेति जीवेति जयेति शब्दः ११

---

१ षष्टिका=तंदुलविशेषः ।

रत्नानि भृंगारकवर्धमान-
ध्वजाश्च वर्द्धकपशुः फलानि ।
सिद्धार्थमित्राणि सुवेषधारी
नरोऽथ नारी यवताम्ररौप्यम् ॥ ११५ ॥

स्वर्णं च तांबूलमनेकभक्ष्यं
रक्तं मनस्तोषकरं च यत्स्यात् ।
रतं च कस्याप्यनुकूलवायुः
श्रुतोऽपि दृष्टो नृपतिः प्रसूता ॥ ११६ ॥

सद्योऽपि गौरोदनमत्र शस्तं
वामे न चंद्रोदितदर्शनं स्यात् ।
रिक्तो घटः स्वानुग एतदारात्
प्रदक्षिणीकृत्य नृपः प्रयायात् ॥ ११७ ॥

क्रमेलकश्च भ्रमरः पिकस्त्री
वदञ्छुकः स्त्री समनामकार्ये ।
ते वामतः शस्ततराः प्रदिष्टाः
खरस्य शब्दोऽपि च वामपृष्ठे ॥ ११८ ॥

धेनुः काली कुक्कुटः पुंप्रथा ये
दक्षे सिद्धौ कीर्तिता प्राक्तनैस्ते ।
भारद्वाजो हंसवत्स्तौ शिखंडी
चाषः सर्पद्विट् शुभा दृष्टमात्राः ॥ ११९ ॥

विषमास्तु खगा मृगा व्रजंतः
फलसिद्धयै कथिताः प्रदक्षिणं ते ।

कपिपिप्पकक्रृक्षभाससंज्ञाः ऽ
शुनकश्छिक्करकः शुभास्तु दक्षे ॥ १२० ॥

( अथापशकुनानि )

अरुणपुष्पगुडास्थितुषेंधनं
तृणदृषल्लवणायसकर्दमाः ।
रुदिततक्रखलासितधान्यकं
भसितधूमयुतानलदुःखिताः ॥ १२१ ॥
जटिलमुंडितनग्नसरुक्खल-
क्षुधितवैरिकषायिमलाविलाः ।
पतितपाशिविमुक्तकचोन्मदा
वमिकृदंगविहीनकतस्कराः ॥ १२२ ॥
वंध्या नारी गुर्विणी मुक्तकेशा
रंडा सर्पः श्यामवर्णो वृषश्च ।
पातश्छिक्का रिक्तकुंभः क्षतं गो
दह्यद्गेहं क्रोधचित्ताप्रसादाः ॥ १२३ ॥
यानपलायनवस्त्रशरीरि
द्राक्स्खलनं कलहश्च निषेधः ।
सूकरजाहश्शशोरगगोधा-
गर्दभकोष्ट्रकरूढनरेक्षाः ॥ १२४ ॥
मागाः क्व यासि तिष्ठेत्येवं रूपो निषेधश्च ।
पिष्टान्नमशुभं सर्वं भ्रष्टं धान्यं न सिद्धये भवति ॥ १२५ ॥

---

१ जाहो—मार्जारः ।

विट् कार्पासश्चौषधोपानहश्च
तैलं सन्न्यासी तथाभ्यक्तदेहः ।
भेको मार्जारः खरश्चैवमाद्या
यात्राकाले नो शुभा दृष्टमात्राः ॥ १२६ ॥

आद्ये यामे शंभुदिक्स्त्रये च युग्मे शक्राशादिगे च त्रये च।
प्रादक्षिण्यादेवमेवाष्टयामे क्रोष्टा नेष्टः संवदत्सर्वदिक्षु १२७

( दिक्परत्वे राहुभ्रमणम् )

हरिमरुद्यमशंकरनीरपानलकुवेरसुरारिककुप्सु च ।
प्रहरखंडमिता तमसः स्थितिर्गमिषु दक्षिणपृष्ठगता शुभा१२८

( अथ क्षुतस्य शुभाशुभविचारः )

शयनाशनयोर्विवाह(द)काले-
ऽप्यगदे वाहनरोहणेऽप्यधीतौ ।
क्षुतकं बहु शोभनं प्रदिष्टं
मुनिभिः शास्त्रपरैश्च बीजवापे ॥ १२९ ॥

कार्याभावो वह्निभीतिश्च हानिः
स्वेष्टं भोज्यं सर्वकार्यं कलिश्च ।
द्रव्यप्राप्तिश्चार्द्धयामप्रसंख्यैः
काष्ठायाः स्याच्छिक्किकायाः फलानि ॥१३०॥

( शकुने विशेषः )

रोगोपचारे च दुरोदरे च
नदीप्रतारे समरे दरे च ।
इडाभरे ग्रामगृहप्रचारे
नष्टे क्षणे स्याच्छकुनोऽन्यथा सत् ॥ १३१ ॥

प्रथमकेऽशकुने विनिवृत्य च
प्रयत आचमनीय सुसंयमान् ।
गज ८ मिताँश्च विधाय नरो व्रजे-
दपि परे द्विगुणान्न तृतीयके ॥ १३२ ॥

आवश्यके चेच्छकुनोऽशुभः स्या-
द्दत्वा घृतं हेमयुतं प्रयायात् ।
यात्राप्रणीतः शकुनो नृपस्य
राज्याभिषेकेऽपि स एव वेद्यः ॥ १३३ ॥

ग्रंथाननेकानवलोक्य सम्यक्
संदर्भिते विठ्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुमनामधेये
यात्राभिधानं कुसुमं समाप्तम् ॥ १३४ ॥

---

( अथ वास्तुकुसुमम् )

विना न धामास्ति गृहस्थधर्मो
विश्रांतिधामैव वदंति धाम ।
वदामि तस्माद् गृहभादिशुद्धिं
बुद्ध्या विचार्यर्षिमतानि सम्यक् ॥ १ ॥

( पुरग्रामादिषु स्वनामराशेः शुभाशुभम् )

स्वनामंराशेर्भवेदिक्ंसुतांकें-
र्धनोन्मिता भूर्धनदान्यथा न ।
कोणोऽन्त्यजानां सुखदोऽन्यवर्णो
न सौख्यभाक् तत्र यमस्य दिक्तः ॥ २ ॥

( राशिपरत्वेन शुभाशुभविचारः )

युवतिकर्किधनुर्धरजूकका-
क्रियघटालिझषा न सुखाशिनः ।
नगरमध्यगता न परे सुरे-
श्वरदिशो बलिनः खलु वर्गकाः ॥ ३ ॥

( अथ ग्रामात्मनोरुत्तमर्णत्वाधमर्णत्वविचारः )

अकौ चटौ चापि तपौ यशौ च वर्गास्तदीशा गरुडौ तु सिंहाः ।
श्वसर्पमूषेभमृगाः स्वदिक्को न सन्मुखे वासमुशंति तज्ज्ञाः ४

द्विघ्नः स्ववर्गः परवर्गयुक्तः
मिथोऽष्टशेषे किल काकिणीनाम् ।
संख्या तु यस्याधिकतां लभेत
सोऽर्थान् प्रदद्यादपरस्य पुष्टान् ॥ ५ ॥

( वर्णपरत्वे भूमिविचारः )

भूमिः श्वेता रक्तपीता च कृष्णा
विप्रादीनामंत्यवर्णे विमिश्रा ।
स्वादुः कट्वी तिक्तकाषायका च
सर्पी रक्तान्नासवैस्तुल्यगंधा ॥ ६ ॥

( भूमिशोधनम् )

विप्रादिवर्णे क्रमशः प्लवः स्यात्
सौम्यादितः किं बहुधा मनो हि ।

---

१ अत्र यशवर्गयोः=इभमृगौ स्वामिनौ ग्रंथकृता कथितौ तत्र कश्यप-वसिष्ठनारदाः प्रमाणं तच्च पीयूषधारायां काकिणीविचारे दर्शितम् ।

संरज्यते तत्र गृहं प्रकुर्याद्
गृहस्य कर्ता यदि पृच्छकाले ॥ ७ ॥
यद्वर्गपूर्वाक्षरमुच्चरेद्यः पूर्वं तदाशागतशल्यमस्ति ।
मध्ये ह्पायैरिति शल्यशुद्धिं कृत्वा सुधीः शुद्धसमक्षमायाम्

( दिग्साधनम् )

नृपांगुलैः संमितकर्कटेन सूत्रेण वा वृत्तवरं विलेख्य ।
अमुष्य मध्ये विनिवेश्य शंकुं तद्भाविशेद्यत्र यतोऽपयायात्
तच्चिह्नयुगेऽपि च सूत्रदानात् प्रत्यक्तथैंद्री भवतः क्रमेण ।
तन्मत्स्यतो दक्षिणसौम्यकाशे स्फुटप्रकाशे गृहकर्मणि स्तः १

( गृहारंभे मासशुद्धिः )

राधे गृहं श्रावणमासि कार्यं मार्गेऽलिसूर्ये मकरार्कपौषे ।
माघे तपस्ये कलशस्थसूर्ये केचिच्च माघं न शुभं वदंति १

( संक्रांतिपरत्वेन पूर्वादिमुखगृहविचारः )

एणास्यकर्कद्वयगेऽपि सूर्ये प्राचीप्रतीचीमुखआलयः सन् ।
तुलाजयुग्मे यमसोमवक्त्रश्चेदन्यथा दुःखकरः प्रदिष्टः ॥१२

( वर्णपरत्वेन द्वारनिवेशनम् )

पूर्वादितो राजविडंत्यविप्रराशेः शुभं द्वारमुशंति संतः ।

( वास्तुपुरुषविचारः )

भाद्रत्रये वास्तुपुमान् हि शेते प्राक्शीर्ष एवं परतोऽन्यदिक्ः
मासत्रये च त्रितये च शीर्षदिशास्य सद्मोत्तममाहुरार्याः ।

( आयपरत्वेन द्वारविचारः )

द्वारं च पूर्वादिषु गोगजाये ध्वजे मृगेंद्रे शुभदायि दिष्टम् १

( वर्णपरत्वेन गृहविचारः )

द्विजे प्रतीचीमुख आलयः सन्
नृपे तथा सौम्यमुखः शुभाय ।
प्राचीमुखो वैश्यजने शुभः स्यात्
याम्यामुखः शूद्रजने निरुक्तः ॥ १५ ॥

( द्वारेऽन्यो विशेषः )

गृहस्य दैर्घ्ये नवधा विभक्ते पूर्वादितो रामर्षडर्थबाणे ।
द्वारं तु सव्याच्छुभदं विभागे सर्वत्र तुर्ये ४ मुनयो वदंति १६

( द्वारचक्रम् )

सूर्यर्क्षाद् युगनागाष्टगुणवेदैः शुभाशुभम् ।
शिरः कोणद्वारशाखादेहलीमध्यगैः क्रमात् ॥ १७ ॥




( गृहारंभनक्षत्राणि )

वसुध्रुवेज्यानिलपाशिहस्तमृद्वर्क्षसंज्ञैर्गृहनिर्मितिः स्यात् ।

( वत्सचक्रम् )

सूर्यर्क्षतः स्युः स्वररुद्रकाष्टा मितान्यनिष्टानि शुभानि वत्से ॥

| | | |
|---|---|---|
| ७ | ११ | १० |
| नै | शु | ने |

( स्तंभोच्छ्राय-शिलान्यास-सूत्रादि )

न रिक्ततिथ्यां न कुजादिवारां-
शकेऽपि पाठीनघटस्थचंद्रे ।
स्तंभोच्छ्रितिं नो तनुयाच्छिलानां
विन्यासससूत्रादि समाचरेच्च ॥ १९ ॥

( गृहनिर्माणे लग्नशुद्धिः )

स्थिरेऽथवा द्विप्रकृतौ विलग्ने
शुभग्रहैर्युक्तनिरीक्षिते च ।
शुभैः सवीर्यैर्नवपंचकेंद्र-
गतैर्विशेषाद्दशमस्थितैश्च ॥ २० ॥
पापैस्त्रिषष्ठायगतैः शुभं स्याद्
गृहस्य निर्माणमितीरयंति ।
क्रूरोऽष्टमो नो शुभकृत्तथास्त-
नीचारिगाः सूर्यसितेंदुपूज्याः ॥ २१ ॥

( क्षेत्रफलाद्यानयनम् )

विस्तार आयामगुणे फलं त-
दष्टावशेषं ध्वजमुख्यआयः ।
फलेऽष्टविघ्ने भहृते च शेषं
धिष्ण्यं तदष्टाप्तमिदं व्ययः स्यात् ॥ २२ ॥
पूर्वादितः स्युः शशियुग्मवेदै-
र्गजास्तु शालाध्रुवकास्तदैक्यम् ।
१-२-३-४-५-६
एकेन युक् स्याद् गृहमेकतः षट्-
विश्वाभ्रंसंख्यं युगलाक्षराणि ॥ २३ ॥

वेदाक्षरं सप्तम आलयः स्या-
द्वर्णास्तु शेषा इति षोडश स्युः ।
ध्रुवं च धान्यं जयनंदसंज्ञे
खरं च कांतं च मनोरमं च ॥ २४ ॥
सुमुखं दुर्मुखं क्रूरं विपक्षं धनदं क्षयम् ।
आक्रंदं विपुलं चैव विजयं षोडशं तथा ॥ २५ ॥
वदंत्यमीषामभिधासमानं
फलं च शिल्पागमजातबोधाः ।
फलं व्ययाढ्यं गृहनामवर्ण-
युतं त्रिभक्तं खलु जायतेंऽशः ॥ २६ ॥

( आयनामानि )

ध्वजोऽपि धूमोऽपि च केसरी श्वा
वृषः खरेभावपि वायसश्च ।
आया अमी स्युर्विषमाः प्रशस्ताः
स्थाने निजे सर्वगतो ध्वजायः ॥ २७ ॥
अल्पव्ययं सद्बहुलायमंशा
इन्द्रो यमो भूपतिरंतकोऽसत् ।
चांद्रे गृहर्क्षेऽपि पुरोऽथ पृष्ठे
दिग्द्वारभस्थे न सुखं कदाचित् ॥ २८ ॥

( अथ प्रकारांतरेणापि फलाद्यानयनेऽस्मद्गुरूणां पद्यम् )

व्येकेष्टर्क्षहता द्विबाणशशिनोऽत्यष्ट्यायुतास्तेऽपि च
व्येकेष्टायहतैकनागसहिताः षण्मूर्च्छनाभिर्हृताः ।

शेषं क्षेत्रफलं भवेदभिमतस्वेष्टाय नक्षत्रजं
स्याद्दैर्घ्यं तदभीष्टविस्तृतिहृतं दैर्घ्योद्धृतं विस्तृतिः (१)

( प्रकारांतरेण गृहस्यायादिनवकानयनम् )

गोनंदषण्णागगुणाष्टनागसमुद्रसर्पैर्गुणिते क्रमेण ।
फले हृते सर्पहयांकसूर्यनागर्क्षतिथ्यर्क्षदशघ्नसूर्यैः ॥ २९ ॥

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| गुणकः | ९ | ९ | ६ | ८ | ३ | ८ | ८ | ४ | ८ |
| भाजकः | ८ | ७ | ९ | १२ | ८ | २७ | १५ | २७ | १२० |

भवेदथाऽऽयो दिनसंशकः स्व-
मृणं च तारातिथियोगकायुः ।
विवाहवद् गेहपगेहमेलो
नाडीयुतिस्त्वत्र शुभा न भैक्यम् ॥ ३० ॥

( राशिविचारो गर्गमते )

मेषेऽश्विनीतस्त्रितयं निरुक्तं
सिंहे मघातस्त्रितयं तु मूलात् ।
त्रयं च चापे परभेषु युग्मं
युग्मं मुनिर्गर्ग इदं जगाद ॥ ३१ ॥

तीक्ष्णोग्रमिश्रार्ककुजालिकुंभान् विहाय मासे नवमे प्रवेशः ।
सूतीगृहे सप्रसवस्य काले सद्योदिते तत्करणं शुभाय ॥ ३२ ॥

( राहोर्मुखं खातकरणं च )

झषार्कतो मृगार्कतो मृगारिसूर्यतस्त्रिभे ।
सुरालये जलाशये गृहेऽपसव्यतः क्रमात् ॥ ३३ ॥
महेशदिक्कईरितं तमोमुखं विदिक्षु च ।
ततस्तु पृष्ठतः शुभं बुधैरवादि खातकम् ॥ ३४ ॥

( आयादिकं कुत्र नावलोक्यम् )

आयव्ययौ तार्णगृहे न चिंत्यौ
मासादिशुद्धिर्न कृतो न वेशे ।
यद्दंतहस्ताभ्यधिकं गृहं स्या-
त्तत्रापि चायादि न शोधयेच्च ॥ ३५ ॥

( दिग्परत्वेन कूपविचारः )

धनं सुतार्तिस्तरुणीक्षतिश्च मृतिर्धनं भीः सुखमृद्धिरैंद्र्याः ।
फलं तु कूपे गृहमध्ययाते धनस्य हानिर्मुनिभिः प्रदिष्टा ३६

( अथ गृहायुर्विचारः )

मूर्तौ सुरेज्यः कविरंबुयायी बुधोऽपि कांतासदनैककेलिः ।
रिपौ रविर्विक्रमगश्च मंदः शतायुरुक्तं सदनं तदानीम् ३७
शुक्रस्तनौ राज्यगतो बुधश्च सुरेशपूज्योऽखिलकेंद्रयायी ।
सरोजिनीनायक आययातः सुखैः समृद्धं सदनं शताब्दम् ३८
पुत्रे गुरुर्लग्नगतः कविश्च रिपौ कुजो विक्रमगो दिनेशः ।
धनैर्धनैर्वश्यजनैः समृद्धं शतद्वयाब्दं सदने निवासः ॥३९॥
उच्चशालिभृगुजे विलग्नगे तुंगयायिनि गुरौ सुखेऽथवा ।
स्वोच्चगे रविसुते भवस्थिते नंदते हि भवनं चिरं श्रिया ४०

ऽ प्राग् लग्नशायी निजमंदिरेन्दुः
केंद्रे गुरुः श्रीसहितं चिरं स्यात् ।
मित्रस्वगेहांशकतुंगयातैः
खेटैश्च नीचांशगतैर्न सौख्यम् ॥ ४१ ॥
पदे १० हिमांशुर्जलगोऽपि जीवो
लाभालये भूसुतभास्करौ चेत् ।

अशीति वर्षाणि गृहं तदानीं
धनैश्च धान्यैः पशुभिः समृद्धम् ॥ ४२ ॥

स्मरे पदे वापि च कश्चिदेकः परांशगः खेचरनायकश्चेत् ।
करोति गेहं परहस्तयातमब्देन वर्णेश्वरनिर्बलत्वे ॥ ४३ ॥
ग्रंथाननेकानवलोक्य सम्यक् सन्दर्भिते विठ्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुमनामधेये सद्वास्तुसंज्ञं कुसुमं समाप्तम् ॥ ४४ ॥

---

( गृहप्रवेशकुसुमम् )

अट्टालिकालिंदगवाक्षजालैरलं विशाले रचितालयेऽपि ।
काले सुशीले यदि संप्रवेशः सुखाय तत्कालमतोऽभिधास्ये १

( त्रिविधो गृहप्रवेशः )

अपूर्वसंज्ञो नवमंदिरे स्याद् यात्रावसाने तु स पूर्वसंज्ञः ।
द्वंद्वाभिधो वह्निजलादिनष्टगेहे प्रवेशस्त्रिविधोऽयमूह्यः ॥२॥

( गृहप्रवेशे मासादिशुद्धिः )

विचैत्रमाघादिकपंचमासे नवे गृहे याननिवृत्तितोऽपि ।
प्रवेश इष्टो विकुजार्कवारे नष्टेंदुरिक्ताचरलग्नभागे ॥ ३ ॥
दिग्द्वारनक्षत्रमृदुध्रुवैः स्यात् प्रवेशनं श्रेष्ठमथांगराश्योः ।
ताभ्यां च योगे त्रिषडायपापैः शुभैर्धनत्र्यायशरांककेंद्रैः ४
शुद्धेऽष्टतुर्ये(शुभे चतुर्थे)न षडष्टरिष्फे
चंद्रे—

( जीर्णगृहे विशेषः )

—ऽथ जीर्णे नभऊर्जमार्गे(घे) ।
पूर्वोदिते मास्यपि

( गृहप्रवेशनक्षत्राणि )

पुष्यवायु-

जलेशवस्वर्क्ष अथोक्तभेषु ॥ ५ ॥

( जीर्णगृहेऽस्तादिदोषाभावः )

अस्तादिदोषस्तु न चात्र जीर्णे पंचांगशुद्धयैव शुभः प्रवेशः ।

( वास्तुनक्षत्राणि )

कार्यं तु वास्त्वर्चनमत्र पूर्वं मृदुध्रुवक्षिप्रचरास्त्रपेषु ॥ ६ ॥

( वामार्कविचारः )

रंध्रात्सुताच्चाथ धनाच्च लाभात् पंचस्थितेऽर्के क्रमशो विशेच्च ।
प्रागादिवक्त्रं सदनं यतः स्याद् वामो रविः पृष्ठसितः शिवाय ७

( कलशशुद्धिः )

प्रवेशकलशे चक्रे सूर्यभाच्छैरदंतिर्निः ।
गंजर्षड्भानि गदितान्यशुभानि शुभानि च ॥ ८ ॥

| ५ | ८ | ८ | ६ |
|---|---|---|---|
| ने | श्रे | ने | श्रे |

( गृहप्रवेशः कदा कार्यः )

अच्छादिते चाकृतवास्तुपूजे कपाटशून्ये कृतविप्रभक्ते ।
बलिक्रियातोरणचिह्नशून्ये भवेत्प्रवेशो बहुदुःखदायी ॥ ९ ॥

( गृहप्रवेशः केन प्रकारेण कर्तव्यः )

कलशं जलसंभृतं पुरस्तादपि कृत्वा शुभपुण्यमंत्रविप्रान् ।
शकुनैर्गमनोदितैर्विलोमै रमणीयं भवनं विशेत्सहर्षः ॥१०॥
ग्रंथाननेकानवलोक्य सम्यक् संदर्भिते विठ्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुमनामधेये गृहप्रवेशः कुसुमं समाप्तम् ॥ ११ ॥

---

( देवप्रतिष्ठाकुसुमम् )

( देवप्रतिष्ठायां मासादिशुद्धिः )

देवप्रतिष्ठा सकलार्थदात्री माघादिपंचस्वपि मासकेषु ।
सा शुक्लपंचप्रमितात्तिथेस्तु यावच्च कृष्णा दशमी प्रशस्ता १
तत्र रिक्ततिथिवर्जिते तिथौ भौमवर्जितदिनेऽथ विशेषः ।
विघ्नराजगिरिजामहेश्वरस्थापनं भवति तत्तिथीषु च ॥ २॥

( प्रतिष्ठानक्षत्राणि )

लघुध्रुवस्वातिमृगानुराधाज्येष्ठाश्रवो मूलभपूषपूर्वाः ।
शस्ताः प्रतिष्ठासु

( देवपरत्वे विशेषनक्षत्राणि )

लघुध्रुवांत्य–
श्रवोयुगादित्यमृगानुराधाः ॥ ३ ॥
विष्णोः प्रतिष्ठासु हिताः श्रुतीज्ये
स्यात्कैंद्रयोः स्कंदधनेशयोश्च ।
मैत्रे रवेस्तद्ध अथास्रपे तु
दुर्गादिकानां स्थितिरत्र शस्ता ॥ ४ ॥

यक्षभूतफणिवाग्गणनाथाः प्रांत्यभेऽथ सुगतः श्रवणेऽपि ।
लोकपास्तु वसुभेऽखिलखेटाः पुष्य एव निखिलाः स्थिरभेषु ५

( प्रतिष्ठायां लग्नशुद्धिः )

सिंहे सूर्यः शंकरो द्वंद्वलग्ने
विष्णुः कन्यायां घटे चापि धाता ।
देव्यो लग्ने द्विस्वभावे चरे च
क्षुद्राः सर्वे ते स्थिरे स्युः शुभाय ॥ ६ ॥

इश्ये गुरौ दैत्यगुरौ च चंद्रे
लाभेऽखिलाः पापखगास्त्रिषष्ठे ।
तमो रवी राज्यंगृहे तु सौम्याः
केंद्रत्रिकोणे त्रिधने शुभाः स्युः ॥ ७ ॥

( देवपरत्वेन दक्षिणायने प्रतिष्ठा )

श्रीवाराहो मातरो भैरवश्च
चंडी स्थाप्या दक्षिणे चायनेऽपि ।

( प्रतिष्ठायां रात्रिरपि श्रेष्ठा )

रात्रौ देवस्थापनं चापि कार्यं

( आश्विनमासे देवीस्थापनम् )

देव्या मासे चाश्विने तद्विशेषात् ॥ ८ ॥

( जलाशये विशेषः )

जलप्रतिष्ठोत्तरगे दिनेशे
तिथौ त्रिकामद्विदिनेशपूर्णे ।
ध्रुवेंद्रमूलेंदुलघुश्रवोऽन्त्य-
मैत्रे जले सद्दिनलग्नके स्यात् ॥ ९ ॥

ग्रंथाननेकानवलोक्य सम्यक् संदर्भिते विठ्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुमनामधेये देवप्रतिष्ठाकुसुमं समाप्तम् ॥ १० ॥

---

( दीक्षाविधानकुसुमम् )

( दीक्षायां मासादिशुद्धिः )

दीक्षाविधानं शुभकारि राधे माघद्वये चाश्विनतस्त्रयेपि ।
पक्षे सिते कृष्णदलांत्यभागे मलिम्लुचे भूतनयश्च हेयः ॥१॥

तिथ्यः प्रशस्ताः सकला विशेषाच्छ्रियो द्वितीयाथ रथांगपाणेः।
स्याद् द्वादशी भूतदिनं शिवस्य सरस्वतीमंत्रविधौ तु कामः२
चतुर्दशी चाष्टमिका द्वितीया कात्यायिनीमंत्रविधौ प्रणीताः।
रवी रवेः स्याद् गणनायकस्य चतुर्थिका मंत्रविधौ प्रशस्ता ३

( दीक्षानक्षत्राणि )

लघुध्रुवादित्यमघानुराधा-
श्रवोऽस्त्रपांत्यैंद्रवमानिलं सत् ।

( दीक्षालग्नशुद्धिः )

पापास्त्रिषष्ठायगताः शुभाः स्युः
सौम्यास्त्रिकेंद्रद्विशरांकयाताः ॥ ४ ॥
रंध्रे विशुद्धे चरभे तु शैवः
स्थिरे हरेर्द्विप्रकृतौ शिवायाः ।
मंत्रः शुभो

( गुरुशुक्रास्तादिनिषेधः )

नीचजिते गुरौ वा
शुक्रेऽपि बाल्ये जरठेऽस्तगे नो ॥ ५ ॥

( संक्रांत्यादिपरत्वेन कालशुद्ध्यभावः )

संक्रांतिवारे ग्रहणे रवींद्वोः नभःसिते भूतदिने प्रयागे ।
श्रीपर्वते चाप्यविमुक्तकेऽपि देव्याः प्रपीठेषु न कालशुद्धिः ६
ग्रंथाननेकानवलोक्य सम्यक् संदर्भिते विठ्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुमनामधेये दीक्षाविधानं कुसुमं समाप्तम् ॥ ७ ॥

---

( अथ विचित्रकुसुमम् )

( तत्रादौ राशिविचारार्थं नक्षत्राणां चरणभेदेनाक्षराणि )

चुचेचोला दस्रभे पादभेदादंकैः पादै राशिरेवं भरण्याम् ।
लीलूलेलो, वह्निभे आइऊए वैरंचे ओवाविवू वर्णसंघः॥१॥
वेवोकाकी ऐंदवे कुघङच्छाः शैवे केकोहाहि चादित्यसंज्ञे ।
हूहेहोडाः पुष्यभे डीडुडेडो भौजंगे मामीमुमे पित्र्यसंज्ञे २
मोटाटीटू भाग्यभेऽथार्यमर्क्षे टेटोपापी सूर्यभे पूषणाठाः ।
पेपोरारी तक्षभे वायुभे स्यू रुरेरोता द्वीशभे तीतुतेतो ॥३॥
नानीनूने मित्रभे नोययीयू शाक्रे येयोभाभि मूले प्रदिष्टाः ।
तोये भूधाफाढ वैश्वेऽपि भेभोजाजी जूजेजोख इत्येव वैधे ४
खीखूखेखो वैष्णवे वासवे स्युर्गागीगूगे गोससीसुर्जलेशे ।
सेसोदादीप्रोष्ठभे वुध्न्यभेऽपि दूञाझाथा पौष्णदेदोचचीति ५

( नक्षत्रपरत्वेन राशिः )

दस्रद्वयं चाग्निभपाद आद्यो मेषोऽग्निभांघ्रित्रयमब्जभूभम् ।
मृगार्धमाहुर्वृषभं मृगार्धमार्द्रादितित्र्यंशकमेष जित्मः ॥ ६ ॥
पादोऽदितेः पुष्यभुजंगभे च कर्को मघायुग्ममथार्यमांघ्रिः ।
सिंहो भवेदर्यमभत्रिपादा हस्तश्च चित्रादलमेव कन्या ॥७॥

चित्रार्धवायुत्रिपदाविशाखा
तुला विशाखांघ्र्यनुशाक्रजोऽलिः ।
मूलद्वयं वैश्वभवांघ्रिरेक-
श्चापो ह्युपांघ्रित्रयविष्णुभे च ॥ ८ ॥

अर्धा धनिष्ठा मकरो धनिष्ठादलं जलेशौजपदस्त्रिपादाः ।
कुंभोऽजपादांघ्रिरतस्तु वुध्न्यं स्यात्पूषभं मीन इतीरयंति ९

( अथांगस्फुरणम् )

अंगस्फूर्तिर्दक्षभागे नराणां
वामे सा स्यात्सुंदरीणां शुभाय ।
सर्वेषां सा भालशीर्षे सुखाप्त्यै
व्यस्ता दुष्टा तत्र दद्यात्स्वशक्त्या ॥ १० ॥

( अथ पल्लीसरठारोहणफलम् )

वक्त्रे चैव हनूनके विचरणे दक्षेऽपि सर्वांगके
नाभ्यां स्याद् हृदयोदरे च शुभदा मिश्रा च वामांगके ।
वंशे कंठतले च लिंगगुदयोर्बस्तौ च्युतानिष्टदा
पल्ली स्यात्कृकलासरोहण इदं स्त्रीणां फलं व्यत्ययात् ॥११॥

( अथ शकुनविचारः )

स्वप्ने शुभः शैलगजेंद्रवृक्षतुरंगमस्यंदनमर्त्यरोहः ।
विट्लेपशुक्रोदनकं मृतं च रक्ताप्लुतिः पानमथाहि दंशः १२
शय्यागृहांगासनदाहदृष्टः शीर्षच्छिदास्रक्स्रवपायसाशाः ।
सद्वेषनारीसुरतं फलांबु पद्मातपत्रध्वजमंत्रलाभाः ॥ १३ ॥
गोभूपहेमेक्षणमत्र शस्तं पितृद्विजस्वप्नवचस्तु तथ्यम् ।
प्रासादवीक्षातरणं तथाब्धेर्मनुष्यमांसाशनभोजने च ॥१४॥
दुष्टं विवाहोत्सवमद्यपानहास्यं च कृष्णारुणवस्तु यच्च ।
देवद्विजानीकपगोऽतिरिक्तमन्यत्सदन्यच्छकुनेतरेषु ॥ १५ ॥

अब्दात्तदर्धाच्चरणाच्च मासात्
स्वाप्नं फलं स्यात्प्रहरैर्निशायाः ।
सद्यः फलं चोषसि योऽतिदीर्घो
दिवा वृथा स्याच्छयनात्पुनश्च ॥ १६ ॥

चिंतारुजोत्थः कफवातपित्तप्रकोपजातश्च वृथा भवेत्सः ।
विप्रे वदेत्संतमसंतमेनं नैवोच्चरेत्तत्र जपेन्मुरारिम् ॥ १७ ॥
ग्रंथाननेकानवलोक्य सम्यक् संदर्भिते विठ्ठलदीक्षितेन ।
मुहूर्तकल्पद्रुमनामधेये विचित्रसंज्ञं कुसुमं समाप्तम् ॥ १८ ॥

---

( अथ ग्रंथालंकारः )

कृष्णात्रिगोत्रे नितरां पवित्रे पवित्रकर्माऽजनि बूवशर्मा ।
तत्सूनुना विठ्ठलदीक्षितेन मुहूर्तकल्पद्रुम एष चक्रे ॥ १ ॥
कल्पद्रुमश्चेत्किमु रत्नमाला चिंतामणिः कंकर एव मन्ये ।
यदेकदेशः किल मंजरीयं सारं विचारं कुरु तत्त्ववेदिन् ! २

नानाफलाढ्यैः कुसुमैः समेतः
कल्पद्रुमः कल्पितवस्तुदायी ।
आकल्पमाकल्पविभूषितानां
गेहेऽस्तु नित्यं विबुधाधिपानाम् ॥ ३ ॥

इति श्रीमत्सकलविद्वत्कुलवंदितचरणदैवज्ञवर्याग्रगण्यश्रीविठ्ठल-
दीक्षितविरचितो मुहूर्तकल्पद्रुमः समाप्तः ॥



## संस्कृत-ज्योतिष ग्रंथ.

| | | |
|---|---|---|
| ताजकनीलकंठी—सटीक ... ... ... | १ | ।· |
| मुहूर्तमार्तंड—( मार्तंडवल्लभाव्याख्येसहित ) ... | ॥। | ८= |
| मुहूर्तचिंतामणि—पीयूषधारा ... ... ... | २॥ | ·॥· |
| सारावली—श्रीकल्याणवर्मविरचित ... ... | १॥ | ·॥= |
| आर्यासप्तति—भट्टोत्पलाचार्यकृत, टीकेसहित. | ·।· | ८– |
| विवाहपटल—सारसमुच्चय. | ·।· | ८– |

## मराठी भाषांतर केलेलीं ज्योतिषशास्त्राचीं पुस्तकें.

| | | |
|---|---|---|
| मुद्राज्योतिष सार्थ—( पटवर्धनी विद्या ) हें पुस्तक संपादक "कुंडलीविज्ञान" यांनीं तयार केलें असून त्याची दुसरी आवृत्ति छापून विक्रीस तयार आहे. यांत शारीरिक लक्षणांवरून जन्मकालीन ग्रहांचें ज्ञान कसें करून घ्यावें याचा मार्ग दाखविला आहे. | ·॥= | ८= |
| सुलभजातक भाग १ ला. ... ... ... | ·।= | ८– |
| सुलभजातक भाग २ रा. ... ... ... | १ | ८= |
| सुलभजातक भाग ३ रा. ... ... ... | १ | ८= |
| उडुदायप्रदीप सार्थ. ... ... ... ... | ·।· | ८– |
| जैमिनिपद्धति सार्थ. ... ... ... ... | ·॥· | ८– |
| जातकालंकार सार्थ. ... ... ... ... | ·।= | ८– |
| योगचिंतामणि सार्थ. ... ... ... ... | ·।= | ८– |
| षट्पंचाशिका सार्थ. ... ... ... ... | ·॥= | ८– |
| दगार्गलशास्त्र सटीक—आवृत्ति तिसरी, विहिरी खणवणारांस पाणी पहाण्याची अपूर्व सोय. ... | ·।≡ | ८– |
| स्त्रीसामुद्रिक सार्थ. ... ... ... ... | ·।= | ८– |
| स्त्रीजातक सार्थ. ... ... ... ... ... | ·।≡ | ८– |

पांडुरंग जावजी,
निर्णयसागर छापखान्याचे मालक,
कोलभाट लेन, मुंबई. २